तमसो मा ज्योतिर्गमय

卐

यो वै भूमा तत् सुखम् ।
नाल्पे सुखमस्ति । भूमैव सुखम् ।
यो वै भूमा तद् अमृतम् ।
अथ यद् अल्पं तन् मर्त्यम् ॥



# विषय-सूची


| स्तम्भाः | विषयाः | लेखकाः | पृष्ठसंख्याः |
|---|---|---|---|
| | श्रुति-निकणः | | |
| | सूक्ति-निर्झरः | | |
| | जय जन-तन्त्र ! (कविता) | —पं० श्रीबटुकनाथ शास्त्री खिस्ते (ग० सं० कालेज-काशी) | |
| | हर्षगीतिः (कविता) | —पं० श्रीआनन्द झा न्यायाचार्यः (काशी) | |
| शास्त्र—निबन्धः | | | |
| | दर्शनेषु शब्दस्वरूपम् | —पं० श्रीभूपनारायण झा व्याकरणाचार्यः (व्या० अ० ग० सं० कालेज,काशी) | ९–१२ |
| | प्रत्यासत्ति-विमर्शः | —पं० श्रीरघुनाथशर्मा पाण्डेयः व्याकरण-दर्शनाध्यापकः (ग० सं० कालेज काशी) | १३–२१ |
| विज्ञान—निबन्धः | | | |
| | पञ्चाङ्गस्य दृश्यत्वम् (पञ्चाङ्ग-विमर्शस्यावशिष्टांशः) | —पं० श्रीबलदेवमिश्रः, ज्यौतिषाचार्यः (सरस्वती भवन काशी) | २२–३२ |
| शब्द—विज्ञानम् | | | |
| | किमुपकारा उपसर्गाः किमर्थकाश्च | —प्रो० पं० श्रीचारुदेव शास्त्री एम. ए. ओ. एल. (अम्बाला) | ३३–३९ |
| राजनीतिः | | | |
| | वार्ताशास्त्रीयं किञ्चित् | —पं० श्रीविभूतिभूषणभट्टाचार्यः न्यायाचार्यः (सरस्वती भवन काशी) | ४०–४४ |
| संस्कृतिः कलाच | | | |
| | भारतीय-संस्कृतिः | —जगन्नाथ उपाध्यायः (सरस्वती भवन काशी) | ४५–५१ |

स्तम्भाः | विषयाः | लेखकाः | पृष्ठसंख्याः

**समालोचनम्**

नाम-मीमांसा —पं० श्रीअनन्तशास्त्री फड़के, व्याकरणाचार्यः ( ग० सं० कालेज काशी ) ५२—५४

अनङ्गदेशः ( बलियामण्डलम् ) —पं० श्रीरामाज्ञापाण्डेयः, व्याकरणाचार्यः ( सरस्वती भवन काशी ) ५५—६४

**चतुर्थोपाधि-वितरणोत्सवस्य विवरणम्—**

समावर्तनोत्सवः ६५—६७

उपसम्मेलनानि ६८—७०

ललित-कला-सम्मेलनम् ७१—७६

ल० क० सम्मेलनस्य सहयोगिनः ७७—७८

प्रदत्तपदक-पुरस्कार-विवरणम् ७९—८०

प्राप्त-शुभ-कामनाः ८१—८८

दीक्षान्त-भाषणम् —डा० श्रीसम्पूर्णानन्दमहोदयः ( शिक्षा-श्रम-अर्थ-सचिवः उत्तर-प्रदेश ) ८९—९३

कुलपति-भाषणम् —म०म० नारायणशास्त्री खिस्ते ९४—१०३

सभापति-भाषणम् —काशीराजो विभूतिनारायणसिंहः १०४—१०५

**सम्पादकीयम्—** १०६

सार्वभौमगणतन्त्रम्, अस्माकञ्च विधेयम्

दीक्षान्त-भाषणम्

ललित-कला-सम्मेलनम्

विश्व-शान्ति-सम्मेलनम्


---

# सूचना

"सारस्वती सुषमा" अस्यां पत्रिकायां प्रत्यङ्कं विशिष्टानां हिन्दी-संस्कृत-ग्रन्थानां समालोचनाः प्रकाशयितुमुपक्रान्ताः।

ये महानुभावाः स्वकीय-हिन्दी-संस्कृतग्रन्थानामस्यां पत्रिकायां समालोचनाः प्रकाशिता दिदृक्षन्ते, तैः स्वस्वग्रन्थानामादर्शद्वयं सम्पादकस्य (प्रिंसिपल, गवर्मेन्ट संस्कृत कालेज, बनारस) सविधे प्रेषणीयम्, तत्रैव "समालोचनार्थम्" इत्यप्युल्लेखनीयम्। यथावकाशं ते ग्रन्थाः पत्रिकायां समालोचयिष्यन्ते।

—सम्पादकः

विद्वज्जनों को सूचित किया जाता है कि "सदाचार" (सताम्, आचारः सदाचारः संश्चासौ आचारश्च सदाचारः) विषय पर साङ्गोपाङ्ग विवेचन करते हुए सुन्दर संस्कृत भाषा में एक निबन्ध लिखें जो रायल आक्टोवा साइज़ (8, Vo, Size) का मुद्रित एक फर्मा हो सके। यथा-सम्भव पाश्चात्य लेखकों के विचारों का भी सङ्कलन हो। नूतन विचारों के प्रति भी उपेक्षा नहीं होनी चाहिये। विषय के प्रतिष्ठापन में मौलिकता होनी चाहिये।

यह निबन्ध प्रिन्सिपल, गवर्नमेण्ट संस्कृत कालेज, बनारस के पास १ जुलाई, १९५० तक अवश्य आ जाना चाहिये।

निबन्ध का प्रान्तीय सरकार द्वारा आयोजित तीन सदस्यों की एक समिति द्वारा निर्णय किया जायगा। सबसे अच्छे लेखक को सरकार द्वारा १०१) रु० पुरस्कार दिया जायगा।

नारायणशास्त्री खिस्ते,
प्रिन्सिपल,
गवर्न० संस्कृत कालेज, बनारस।

ता० २३ मार्च, १९५०




काशिक-राजकीय-संस्कृत-महाविद्यालयपत्रिका

५ वर्षः २ अङ्कः

चैत्रः २००७

प्रधानसम्पादकः—
म० म० नारायणशास्त्री खिस्ते

सम्पादकः—
जगन्नाथ उपाध्यायः

यरुच देवि सरस्वत्युपब्रूते धने हिते ।

इन्द्रं न वृत्रतूर्ये ।

त्वं देवि सरस्वत्यवा वाजेषु वाजिनि ।

रदा पूषेवनः सनिम् ।

उत स्यानः सरस्वती घोरा हिरण्यवर्तनिः ।

वृत्रघ्नी वष्टि सुष्टुतिम् ।

यस्या अनन्तो अह्रुत स्त्वेषश्चरिष्णुरर्णवः ।

अमरश्चरति रोरुवत् ।

( ऋग्वेदः-मं. ६ अ. ५ सू. ६१ )

# सूक्ति-निर्झरः

निशान्तनिद्रेव दशेव शैशवी
नवीनवध्वाश्चकितेव दृक्छटा ।
सुरस्रवन्तीव कथेव शाम्भवी
कवीन्द्रवाङ्निर्वृतिमातनोतु वः ॥

जगद्धरभट्टस्य

यथा चतुर्भिः कनकं परीक्ष्यते
निघर्षण–च्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते
श्रुतेन शीलेन कुलेन कर्म्मणा ॥

कस्याऽपि

रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥

कस्याऽपि

यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषा ।
कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ॥

प्राचाम्

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् ।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥

कस्याऽपि

# जयतु जन-तन्त्र !

वटुकनाथशास्त्री खिस्ते

( गा० सं० कालेज )

अपगतपरबलतिमिरं तिमिरञ्जितसिन्धुवीचिनिर्मृष्टम् ।
शिष्टजनैरध्युष्टं भरतभुवः प्राङ्गणं जयति ॥

अरुणैर्दिनमणिकिरणैरुपरञ्जितमिव मनोऽनुरागेण ।
काञ्चनमयमिव काञ्चन सुषमां धत्ते पदं प्राच्यम् ॥

भूवपुषः पूर्वार्द्धे वक्षोहारश्रियं चिरं दधती ।
कस्य न सुखयति नयने नयनेत्रयुता धरा वराऽस्माकम् ॥

तरुदल-विलिखितगैरिकवर्णाहितसूक्तिसन्दोहः ।
कविरिव रविरपि तनुते भरतभुवः स्वागतोल्लासम् ॥

अथ हिमालयशिखरी धवलितमौलिर्बिभर्ति मोदभरम् ।
निर्गलितनीरधाराऽऽप्लावितवसुधाङ्कको नूनम् ॥

सम्मदवल्ली दिल्ली राजेन्द्रभ्रमरभूषिता वहति ।
जनशुममयप्रसूनान्यानन्द-मरन्द-निष्यन्दम् ॥

# हर्ष-गीतिः

श्रीआनन्दझा

स्वाधीनमिदं भारतवर्षं

वद कस्य न हृदि जनयति हर्षम् ?

दिशि दिशि रसालराजीललितं,
सुमनोहर – सुमन–ग्रशत–कलितम्
गङ्गायमुनाऽमल – जल –मिलितं,
स्वस्थितिलाभाय पुनश्चलितम् ॥

मा रामकृष्ण जननी जननी,
परपददलिताऽऽसीदियमवनी ।
नृपविक्रमहर्षाशोक – वनी,
स्वाधीना जाता जनाऽवनी ॥

स्वाधीनमिदं भारतवर्षं····

व्यासप्राचेतस–गौतमभम्,
ऋषिकपिल–कणादस्फुरत्प्रभम् ।
शङ्कर–रामानुज–बुद्ध–विभं,
तुलसी कबीर–गाँधी–विभवम् ॥

यस्योद्धृति लक्ष्यवती जनता,
नवमोहन - नेतृ–पथ–प्रचिता ।
स्वातन्त्र्य–समुन्नत – केतु – नता,
प्रबभूव द्रुतं सफलेव लता ॥

स्वाधीनमिदं भारतवर्षं····

स्वातन्त्र्यमिदं बहु–बलि–कलितम्,
स्थिरमथ तावन्न भवेल्ललितम् ।
कर्तव्यपरायणता – मनुजे,
समुपैति न यावद् भारतजे ॥

समुदेतु भारती परम्परा,
गीता गुरु–गीता ऋतम्भरा ।
सुखिनः स्युर्यया समेहिजनाः,
मा तिष्ठतु कोऽपि जनो विमनाः ॥

स्वाधीनमिदं भारतवर्षं····

जलनाली–लम्भित–बहुन्नम्,
अतिवासस्सौलभ्याऽऽसन्नम् ।
सुमहौषधताड़ित – रोगक्षम्,
सम्पूर्णानन्दोन्नतशिक्षम् ॥

स्वाधीनमिदं भारतवर्षं····




# दर्शनेषु शब्दस्वरूपम्

पं० भूपनारायण झा

( गवर्नमेन्ट संस्कृत कालेज, काशी )

शपति अर्थमाक्रोशति श्रोतुः प्रतीतिपथमवतारयितुमिति शब्दः, शपतेराक्रोशार्थादौणादिकेन दन्प्रत्ययेन शब्दशब्दव्युत्पादनात् ।

स च न्यायवैशेषिकदर्शनयोराकाशविशेषगुणस्वरूपः, संयोगाद्विभागाच्छब्दाच्च ध्वनिवर्णोभयरूपाभ्यामुत्पद्यते । तथा च वैशेषिकसूत्रम् । "संयोगाद्वा विभागाद्वा शब्दाद्वा शब्दनिष्पत्ति" रिति । तत्र संयोगाद्यथा—मूलाधारोत्थितपवनसंयोगात्कण्ठताल्वादिभिरकारेकारादिवर्णस्वरूपेण । भेरीदण्डसंयोगान्मुखोद्गतमारुत–शङ्खसंयोगाच्च भाङ्कारादिध्वनिरूपेण विभागाद्यथा वेणुदलद्वयविभागाच्चटचटाकारादिध्वनिरूपेण, तदुत्पत्तिः ।

यद्यप्यसावुत्पत्त्युत्तरं क्षणमात्रमवस्थाय तृतीयक्षणक्षीयमाणस्वरूपो न क्षमते दूरवर्त्तिनां श्रुतिपथमापतितुम्, तथापि शब्दादपि सजातीयशब्दारम्भाभ्युपगमेन वीचिसन्तानन्यायेनाचरमश्रवणक्षणमनुवर्त्तमाने सजातीयशब्दसन्तानेऽन्तिमः शब्दः श्रावणसंविद्गोचरतामञ्चतीति भगवद्भ्यां पक्षिलाक्षपादाभ्यामुत्प्रैक्षि ।

सौगतदर्शने तु गुणक्रियासमूहो द्रव्यमिति द्रव्यसामान्यपरिभाषया गन्धरसरूपस्पर्शसंघातस्यैव पृथिवीत्वेन, रसरूपस्पर्शसंघातस्यैव जलत्वेन, रूप स्पर्शसंघातस्यैव तेजस्त्वेन शब्दस्पर्शसंघातस्यैव वायुत्वेन, आकाशतत्त्वस्य चासत्त्वेन शब्दस्य नाकाशगुणत्वम्, अपि तु वाय्वात्मकद्रव्यस्वरूपत्वमेवेति सिध्यति ।

शिक्षाकृद्दर्शनेऽपि प्रतिपिपादयिषोदञ्चत्प्रयत्नजाज्वल्यमानान्तरानलेन मूलाधारादुद्वेल्लितः प्राणसमीरणः प्रतिपादयितुरामूर्धमूर्ध्वमभिहत्य प्रत्यावर्त्तमानस्ताल्वाद्यभिघातेन वर्णात्मना परिणमते, भेरीदण्डाभिघातेन शङ्खमुखाभिघातेन चोद्धूयमानः पवनस्तु ध्वनिरूपेणेति वायुपरिणामरूपस्य तस्य वायुद्रव्यस्वरूपत्वमेव सिध्यति । तथा च शुक्लयजुर्वेदप्रातिशाख्यसूत्रम्—"शब्दस्तत्" ( अ. १ सू. ७ ) तत्र तदित्यस्य वायुद्रव्यमित्यर्थः, तस्यैव प्रक्रान्तत्वात् ।

तदुक्तं हरिणा—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥ १ ॥ इति ।

आर्हतदर्शनेऽपि—पूर्यते सजातीयपुद्गलान्तरसंश्लेषवशादिति पुत्, गलति क्षीयते च तद्विश्लेषवशादिति । गलः पुच्चासौ गलश्चेत्यर्थकपुद्गलाख्यपरमाणूपादानकत्वेन "पौद्गलिकः शब्द" इति शब्दसामान्यस्वरूपमसूत्रि । तदुक्तं हरिणा—'अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः' इति । एवञ्च शब्दतत्त्वस्य क्रियाश्रयत्वेन घटादिवद् द्रव्यस्वरूपत्वमेव व्यवतिष्ठते । वायुजन्यक्रियानुगुण्यवैगुण्याभ्यामेव शब्दस्यानुवातप्रतिवाततिर्यग्वातेषु प्रतिपत्त्यप्रतिपत्तीषत्प्रतिपत्तयः प्रणिहितश्रवणेन्द्रियस्यापि सम्भवन्ति ।

स च शब्दस्तन्नये द्विविधस्वरूपः, भाषालक्षणस्तद्विपरीतलक्षणश्च, भाषालक्षणोऽपि द्वेधा, अक्षरात्मकोऽनक्षरात्मकश्च, तत्राक्षरात्मकः शास्त्रारम्भकः संस्कृत–तदपभ्रंशभेदाभ्यामार्यम्लेच्छव्यवहारप्रयोजकः, अनक्षरात्मको द्वीन्द्रियादीनां जन्तूनामविरतानावृतादसीयसूक्ष्मज्ञानप्रतिपादकः । तत्र द्वीन्द्रिया जन्तवस्तण्डुलनलभ्रकृम्यादयः । तेषां स्पर्शनरसनेन्द्रिययोरेव सत्त्वात् । त्रीन्द्रिया पिपीलिकादयः, तेषां घ्राणेन्द्रियाधिक्यात् । चतुरिन्द्रिया भ्रमर-मक्षिका-मशकोरगादयः, तेषां चक्षुरिन्द्रियाधिक्यात् । एकेन्द्रियास्तु पृथिव्यादयः, तेषां स्पर्शनेन्द्रियस्यैव सत्त्वात् । उभयविधोऽपि भाषात्मकः शब्दः कृत्रिमतया प्रायोगिक इत्युच्यते । अभाषात्मकोऽपि द्वेधा—प्रयोग–विस्रसानिमित्तकत्वात्, तयोः प्रयोग-निमित्तकस्तत-वितत–घन-सौषिरभेदैश्चतुर्विधः, तेषु पुष्कर–भेरी–दर्दुरादिप्रभवः शब्दस्ततः, चर्मतननादिजन्यत्वात् । विततस्तन्त्रीजन्यो वीणानादः, घनस्तालघण्टाद्यभिघातजः, सौषिरो वंश–शङ्खादिच्छिद्रोद्भवः, विस्रसा नाम स्वभावस्तन्निमित्तको यथा मेघादिध्वनिरित्यार्हतोत्प्रेक्षितशब्दस्वरूप–प्रपञ्चः ।

सांख्य-योगदर्शनयोस्तु साम्यावस्थ-सत्त्वरजस्तमोरूपायाः प्रकृतेर्महत्तत्त्वद्वारोत्पन्नादहन्तत्त्वाच्छब्दादितन्मात्ररूपाणि सूक्ष्मभूतान्युत्पद्यन्ते। तन्मात्रत्वञ्च शब्दादीनां सुख-दुःख-मोहात्मकावस्थाविशेषशून्यत्वरूपम्। तेभ्यश्च पृथिव्यादिपञ्चमहाभूतान्युत्पद्यन्त इति स्थूलशब्दस्य पृथिव्यादिपञ्चमहाभूतात्मकतया द्रव्यस्वरूपत्वमेवावक्लृप्तते सौगतदर्शन इव तद्दर्शनयोरपि गुणगुणिनोरव्यतिरेकात्। तदुक्तं "परिणामैकत्वाद्वस्तुतत्त्वमिति योगसूत्रभाष्ये शब्दादीनां मूर्त्तिसमानजातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवः, तेषाञ्च एकः परिणामः पृथिवी" इति। तच्च भाष्यम् मूर्त्तिः काठिन्यं तद्व्यङ्ग्या पृथिवीत्वजातिरिति यावत्, तया समानजातीयानां शब्दादीनामेकः परिणामो वैशेषिकैस्त्रसरेणुपदव्यपदेश्यः, तदभिमतद्व्यणुकस्थानीयतन्मात्रावयवकः पृथिवीपरमाणुः सूक्ष्मपृथिवीद्रव्यमित्येवं वार्त्तिककृता व्याख्यायि।

एवञ्चैतावत्सु दर्शनेषु शब्दतत्त्वस्य कार्यत्वेनानित्यत्वमेव स्वरूपतः पर्यवस्यति।

मीमांसादर्शने तु "अथ गौरित्यत्र कः शब्दः गकारौकारविसर्जनीयाः" इति भगवदुपवर्षदिशा वैखरीवर्णव्यतिरेकेण शब्दस्वरूपानुपलम्भेन श्रूयमाणवर्णस्वरूपस्य तस्याकाशवद्विभुद्रव्यत्वम्। साकमर्थेन सम्बन्धज्ञान-प्रत्यभिज्ञानपर्यन्तमस्तित्वस्य क्लृप्ततया तावत्कालं स्थितञ्चैनं कः पश्चान्नाशयिष्यतीति न्यायेन नित्यत्वञ्चोपपद्यते। ध्वनिस्वरूपस्य तु तस्य कार्यत्वेनानित्यतया वायुगुणत्वमेव, न तु द्रव्यत्वम्। तथा हि, तस्य द्रव्यत्वे तत्समवायिकारणतामर्हत आकाशस्यैकत्वमाहोस्विदनेकत्वं स्यात्? नाद्यम्, अनेकद्रव्याश्रितत्वस्य द्रव्यत्वव्यापकतया व्यापकविरुद्धोपलम्भापत्तेः। नान्त्यम्, मानाभावात्। न जातु वायुस्तत्समवायिकारणतामर्हति, तथा सति शब्दस्य वायुस्वरूपत्वापत्त्या श्रावणत्वानुपपत्तेः, तस्मात्तस्य द्रव्यान्यत्वे संयोगविभागनिरूपित-निरपेक्षकारणत्वाभावात् कर्मान्यत्वे च सिद्धे सति परिशेषात्सिध्यतो गुणत्वस्य भेर्यादिपार्थिवद्रव्यनिरूपितत्वे तरङ्गाद्याप्यद्रव्यनिरूपितत्वे वा श्रवणेन्द्रियसन्निकर्षविरहादुपलम्भानुपपत्तिरिति वायुनिरूपितत्वमेवावशिष्यते। तथा सति संयुक्तसमवायेन सन्निकर्षेण तदुपलम्भः सम्भवति। व्याकरणदर्शने तु प्राच्यवैयाकरणदृशाऽपि मीमांसकमीमांसितस्वरूप एव शब्दः तादृशस्यैव तस्य स्फोटपदेन तद्व्यपदिश्यमानस्य मीमांसकसरण्या नित्यत्वं प्रतिवर्णं लाघवादेकत्वं सर्वत्रोपलम्भाद्विभुद्रव्यत्वञ्चेति सर्वमेतन्मीमांसासमानतन्त्रसिद्धान्तभूतम्। परं नव्यवैयाकरणदृशा वैखरीवर्णानां न वाचकशब्दस्वरूपत्वं, नतराञ्च स्फोटपदव्यपदेश्यत्वमुपपत्तिसहम्, "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति हरिकारिकया वाय्वादिपरिणामरूपतया तेषामनित्यत्वात्। तदुक्तं 'परः सन्निकर्षः संहिते'ति सूत्रे भगवता भाष्यकृता येनैव

यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रवर्त्तते" इति । अत एव "सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः वर्णान् जनयते" इति पाणिनि-शिक्षायां 'जनयते' पदस्वारस्यमपि सुतरां सङ्गच्छते ।

किञ्च वैखरीरूपाणामकारादिवर्णानां प्रतिवर्णं लाघवेनैक्येऽपि, इत्वर्णादिभिरानेक्येन गौरवतादवस्थ्यमर्धजरतीयानौचित्यञ्च । अकार-ककारादिविजातीयानेकवैखरीस्फोटानां तद्घटितानामखण्डानां वाऽनेकपदवाक्यवैखरीस्फोटानां तद्व्यञ्जकानामनेकध्वनीनाञ्च कल्पनायामतीव गौरवञ्च । तस्माद्वैखरीवर्णा अपि वैखरीध्वनीनामवस्थाविशेषा एवेति तेषां तद्वदनित्यतया न नित्यशब्दस्वरूपत्वं सम्भवतीति न वैखरीस्फोटः सिध्यति ।

किन्तु प्रलयवेलायां स्वकार्यकदम्बमात्मन्युपसंहृत्य सूक्ष्मतया परब्रह्मणि सुषुप्तवदक्रियत्वेन निलीयमानाया मायाख्यशक्तेरपरिणतप्राणिकर्मप्रतिनियतपरिणमनकालवशेन "एकोऽहं बहुस्यामिति सिसृक्षात्मकवृत्तौ सत्यामवस्थाविशेषात्मकं यद्बिन्दुरूपं त्रिगुणमव्यक्तम्" सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा । विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुतामिति प्रपञ्चसारकारप्रभृतिभिस्तान्त्रिकमौलिमणिभिरमाणि । तस्य यश्चिदंशस्तद्रूप आन्तर स्फोट एव वाचकशब्दस्वरूपतामर्हति । तदुक्तं—शारदातिलके "चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतम्" इति । तस्य चान्तःकरणावच्छेदेनाभिव्यङ्ग्यतयाऽऽन्तरत्वम् । आन्तरस्वरूपत्वादेव शब्दस्य तत्र तत्र ब्रह्मत्वमुद्घोष्यमाणमुपपद्यते । तदुक्तं हरिणा—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरमिति" । श्रीमद्भागवतेऽपि—शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनुरिति । तादृशस्य स्फोटस्य स्वतो बुद्धिग्राह्यत्वेऽपि कण्ठताल्वाद्यभिघातिवायुभिः स्वनिष्ठकत्वादिपुरस्कारेणैवाभिव्यक्तिरिति तत्पुरस्कारेण श्रावणप्रत्यक्षविषयत्वमपीत्यभिसन्धाय" श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्य इति भगवता भाष्यकृताऽभाष्यत । शङ्खाद्यभिघातिवायूनान्तु कत्वादिवैजात्यराहित्येन तैर्ध्वनिरूपेणैवाभिव्यक्तिरिति न ततः शाब्दबोध इत्यलम् ।

———

# प्रत्यासत्ति-विमर्शः

पं० रघुनाथशर्मा

( प्रो० गवर्मेन्ट सं० कालेज बनारस )

( पूर्वतोऽनुवृत्तः )

अथावसरप्राप्तः संनिकर्षो निरूप्यते । तत्र प्रत्यक्षे जननीये इन्द्रियाणां प्रमाणानां व्यापारभूत इन्द्रियार्थसंनिकर्षो लौकिकोऽलौकिकश्चेति द्विविध इति नैयायिकाः । तत्र लौकिकः षोढा । संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेषणविशेष्यभाव-भेदात् । अलौकिकस्तु त्रिधा—सामान्यलक्षणज्ञानलक्षणयोगजधर्मभेदात् । प्रत्यासत्तेर्विशेष्यत्वे सामान्यलक्षणा ज्ञानलक्षणेति स्त्रीत्वेनापि व्यवहारः । ज्ञानलक्षणा उपनयपदेनापि व्यवह्रियते, तज्जन्यं ज्ञानञ्चोपनीतभानमिति । संनिकर्षाश्च तत्त्वचिन्तामणावुक्ताः । तथाहि—प्रत्यक्षखण्डे संनिकर्षवादे ।

"अन्ये तु सामान्यज्ञानप्रत्यासत्त्योरिन्द्रियसंबद्धविशेषणताऽन्तर्भावात्तज्जन्यं प्रत्यक्षं संग्राह्यमेवेति" । अग्रे च "प्रत्यक्षविशेषे संनिकर्षविशेषो हेतुरनुगत एव, संयोगेन द्रव्यग्रहः, संयुक्तसमवायेन रूपकर्मणोर्ग्रहणम्, संयुक्तसमवेतसमवायेन रूपत्वादेः, समवायेन शब्दस्य, समवेतसमवायेन शब्दत्वादेः, [1]विशेषणतया शब्दाभावस्य, इन्द्रियसंबद्धविशेषणतया समवायघटाभावादेर्योग्यसंनिकर्षादेव ग्रहो न संनिकर्षमात्रात् । ननु संयुक्तसमवायेनावयविग्रहोऽस्तु, न तु संयोगादिस्तत्र हेतुः, तस्य रूपादिग्रहे क्लृप्तत्वादिति चेन्न । आत्मग्रहे इन्द्रियसंयोगस्य कारणत्वादन्यत्रापि द्रव्यसाक्षात्कारत्वेन तथाकल्पनात् । ननु संयुक्तसमवायो न गन्धादिग्राहकः किन्त्वाश्रयसंयोगः, एवं गन्धत्वादिग्रहोऽप्याश्रयाश्रयसंयोगादिति संयुक्तसमवेतसमवायोऽपि न हेतुरिति चेन्न, गन्धसमवायिसंयोगस्य हेतुत्वे हि यदि गन्धसमवायस्य विशेषणता तदा स



( १ ) अयं संनिकर्षोऽग्रिमेण गतार्थ इति पृथङ्नोच्यते ।

हेतुरेव। प्रकृते हेतुत्वरूपविधेयान्वयिन एव विशेषणत्वसंभवात्, उपलक्षणत्वे च संयुक्तद्रव्यमात्रमुपलक्ष्यम्, तथाच घटसंयोगात्पटगन्धग्रहप्रसङ्गः। अथ स्वसमवायिसंयोगो हेतुः तत्र समवायोऽवच्छेदकः ( उपलक्षणविशेषेणोभयानुगतमवच्छेदकत्वमात्रं विवक्ष्यते, न तु विशेषणत्वमुपलक्षणत्वं वेति भावः ) इति चेत् तर्हि संयोगिसमवायस्य हेतुत्वे संयोगोऽवच्छेदकः समवायो हेतुरिति तुल्यम्" । इति ।

यद्यपि पूर्वं समवायस्य निर्विशेषणस्य हेतुत्वमुक्तम्, तथापि कर्णसंयोगावच्छिन्नसमवायस्य प्रत्यासत्तित्वं बोध्यम्। तदुक्तं तत्रैव तत्त्वचिन्तामणौ "कर्णसंयोगावच्छिन्नसमवायस्य प्रत्यासत्तित्वादिति"। यस्य शब्दस्य समवायवृत्त्या आधारता कर्णसंयोगेनावच्छिद्यते स गृह्यते, यस्य तु तदत्यन्ताभावेनावच्छिद्यते स न गृह्यते, इति तद्व्याख्यातारः श्रीमथुरानाथप्रभृतयः। सामान्यलक्षणाज्ञानलक्षणे तु तत्त्वचिन्तामणौ अनुमानखण्डे सामान्यलक्षणाग्रन्थतद्व्याख्यादर्शनेन प्रतीयेते।

तथाहि "व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः। कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः, सा चेन्द्रियसम्बद्धविशेषणताऽतिरिक्तैव वा। तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसंनिकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति वदन्ति। तदपरे न क्षमन्ते। तथाहि—अनुमाने पक्षधर्मताबलात् धूमो वह्निव्याप्य इत्यनुभवो न तु सर्वो धूमो वह्निव्याप्य इति येन सर्वमानार्थं तत्स्वीकारः। अपि च संयोगादिसंबन्धेन प्रमेयहेतुके पर्वतः कपिसंयोगाभाववान् प्रमेयादित्यादौ महानसादिषु संनिकृष्टप्रमेये प्रमेयत्वरूपेण व्याप्तिप्रत्यक्षदशायां प्रमेयत्वसामान्यलक्षणप्रत्यासत्त्या पक्षवृत्तिप्रमेयेऽपि व्याप्तिग्रहात् पुरुषः सर्वज्ञः स्यात्। प्रमेयत्वसामान्यलक्षणप्रत्यासत्त्या पक्षवृत्तिप्रमेये व्याप्तिप्रत्यक्षदशायां तया प्रत्यासत्त्या प्रमेयमात्रस्येव ज्ञानात्तदनन्तरं प्रमेयवदित्याकारकसकलपदार्थविशेष्यकस्वस्ववृत्तिसकलधर्मप्रकारकोपनीतभाने बाधकाभावात् अत्रोच्यते। यदि सामान्यलक्षणा नास्ति तदानुकूलतर्कादिकं विना धूमादौ वह्निव्यभिचारसंशयो न स्यात्। प्रसिद्धधूमे वह्निसंबन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात्। सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन व्यभिचारसंशयो युज्यते। न च सर्वज्ञत्वे संशयो न स्यादिति दोषः। घटः स इति घटत्वप्रकारकं हि ज्ञानं संशयविरोधि, तच्च न वृत्तम्, स्वसामग्रीविरहात्, अतो घटत्वादिसकलविशेष-[1]



१ प्रमेयत्वेनेत्यादिः।

ज्ञानेऽपि स घटो नवेति संशय इति। समानाकारो हि निश्चयः संशयविरोधी, अतः एव जाति-मानित्यादिनिश्चयेऽपि घटो नवेति संशयः कोटितावच्छेदकघटत्वांशे निष्प्रकारकः, प्रमेयवन्त इति सामान्यलक्षणाजन्यप्रत्ययस्तु न तथेति"।

सामान्यलक्षणाप्रत्यासत्तिविषये श्रीपक्षधरमिश्र-रघुनाथशिरोमण्योर्विवादे संप्रदायागतमिदं श्रीपक्षधरमिश्रपद्यम्—

वक्षोजपानकृत्काण संशये जाग्रति स्फुटे।
सामान्यलक्षणा कस्मादकस्मादपलप्यते॥

सामान्यलक्षणेत्यत्र सामान्यं लक्षणं यस्या इत्यर्थः। तत्र यदि लक्षणपदेन स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते, तच्चेन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्, तथाहि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारस्तत्र धूमत्वेन संनिकर्षेण धूम इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। यद्यपि धूमत्वादेरिन्द्रियप्रतियोगिकत्वाभावात् संनिकर्षत्वमयुक्तम, तथापि संयोगस्येन्द्रियप्रतियोगिकत्वात् तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः प्रत्यासत्तितानिर्वाहः। ननु यत्र चक्षुःसंनिकर्षेण धूम इति ज्ञानं जनितं, तत्र चक्षुःसंयोगविगमेऽपि तादृशज्ञानमादायेन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतधूमत्वादेर्धूमान्तरे सत्त्वाद् धूमान्तराणां सामान्यलक्षणया ज्ञानापत्तिः, नच तदा धूमो नेन्द्रियसम्बद्धः, ज्ञानलक्षणात्मकसंनिकर्षस्य धूमे सत्त्वात्। नच तत्र सामान्यलक्षणाजन्यज्ञानस्वीकारे क्षतिविरह इति वाच्यम् तन्मूलकज्ञानधारापत्तेर्दुर्वारत्वादिति चेन्न। इन्द्रियसंबन्धस्य लौकिकस्यैव विवक्षितत्वात्, ज्ञानलक्षणात्मकसंनिकर्षस्य चालौकिकत्वात्। इन्द्रियसंबन्धश्चात्र विशेषणत्वेन वर्तमान एवापेक्ष्यते, न तु यथाकथञ्चिद् व्यावर्तकः, अन्यथा धूमप्रत्यक्षानन्तरं चक्षुःसंयोगविगमेऽपि धूमे पूर्वकालीनचक्षुःसंयोगमादाय सामान्यलक्षणया धूमा इति ज्ञानापत्तेः, तदिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तदिन्द्रियजन्यतदिन्द्रियलौकिकसंनिकर्षवद् विशेष्यकज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिर्विवक्षिता। अन्यथा यत्र चक्षुःसंयोगे विद्यमानेऽपि करणादिदोषवशान्न धूमचाक्षुषं किन्तु धूमत्वप्रकारकं स्मरणं तत्र धूमत्वसामान्यलक्षणाजन्यज्ञानापत्तिः, नचैवमणुत्वेन यत्किञ्चिदणूपस्थितौ अणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसो बोधो न स्यात्। तदाऽणौ मनसो लौकिकसंबन्धस्य ज्ञाने मनोजन्यत्वस्य चाभावादिति वाच्यम्। बहिरिन्द्रियस्थले तादृशसामान्यलक्षणाप्रत्यासत्तिस्वरूपस्वीकारात्। १५

मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः, न च बहिरिन्द्रियस्थले लाघवात् इन्द्रिय-संबद्धप्रकारीभूतं सामान्यमेव प्रत्यासत्तिरित्युच्यताम् किमिन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूत-सामान्यस्य प्रत्यासत्तित्वस्वीकारेणेति वाच्यम्। धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषय-कज्ञानाभावप्रसङ्गात्। तत्र धूमेन सहेन्द्रियसंबन्धाभावात्। इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारी-भूतसामान्यस्य प्रत्यासत्तिस्वीकारे तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्प्रकारीभूतं धूमत्वं प्रत्यासत्तिरिति न सकलधूमविषयकज्ञानानुपपत्तिः। परन्तु समानानां भावः सामान्यं, तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि। तत्रैवं सति यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां मानसं न स्यात्, सामान्यस्य तदानीमभावात्। किञ्चाद्य घट इति ज्ञाने परदिने घटा इति ज्ञानापत्तिरपि, तादृशज्ञानप्रकारी-भूतसामान्यस्य परदिनेऽपि सत्त्वात्। तस्मात् सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्नतु तादृशं सामान्यम् तथा च सामान्यलक्षणमित्यत्र लक्षणशब्दस्य विषयोऽर्थः। लक्ष्यते इति कर्मव्युत्पत्त्या बाहुल-कात् कर्मणि ल्युटः स्वीकारात्। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिः। एतन्मते च निर्विकल्प-कसाधारणं स्मरणसाधारणं च सामान्यज्ञानमात्रं प्रत्यासत्तिः कारणम्। घटत्वादिप्रकारकसकल-घटविशेष्यकप्रत्यक्षञ्च कार्यम्। सामान्यस्य प्रत्यासत्तित्ववादिपूर्वमते तु प्रत्यक्षज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः। ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणाऽपि ज्ञानरूपा तदा तयोर्भेदो न स्यादिति चेन्न। सामान्यलक्षणाप्रत्यासत्तिर्हि सामान्याश्रयस्य ज्ञानं जनयति, ज्ञानलक्षणाप्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति भेदात्। अत्रायमर्थः—प्रत्यक्षे संनिकर्षं विना भानं न संभवति। तथाच सामन्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनाञ्च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते। न च सकलवह्निधूमभाना-भावे का क्षतिरिति वाच्यम्। प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वात् अन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। सामान्यलक्षणावादिमते तु सामान्यलक्षणया सकल-धूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसंन्देहः संभवति। सामान्यलक्षणावद् ज्ञानलक्षणाऽपि स्वीकार्यैव। अन्यथा सुरभिचन्दनमिति चाक्षुषप्रत्यक्षे सौरभस्य भानं न स्यात्, सौरभांशे चक्षुःसंनिकर्षाभावात्, सौरभविषयकलौकिकप्रत्यक्षसामग्र्याः सहकारिण्या विरहेण च सौरभत्वसामान्यलक्षणयाऽपि अत्र सौरभभानं न संभवति, अत एव तदिन्द्रियजतद्धर्मबोध-
१६ सामग्र्यपेक्ष्यते इत्युक्तं कारिकावलीग्रन्थे। यद्यपि सौरभाश्रयविषयकलौकिकप्रत्यक्षसामग्र्या अपि सौरभविषयकप्रत्यक्षलौकिकसहकारित्वोपगमेन सौरभत्वसामान्यलक्षणयाऽपि सुरभि-

चन्दनखण्डमिति चाक्षुषं संभवति, तथापि अत्र स्वरूपतः सौरभत्वस्य मानं ज्ञानलक्षणयैव। तदानीं सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्यलक्षणया स्वरूपतः सौरभत्वस्य मानासंभवात्। न च सौरभत्वसामान्यलक्षणयैव स्वाश्रयभानवत् स्वस्यापि भानमस्तु, तुल्यवित्तिवेद्यत्वात् सौरभत्वाविषयकसौरभप्रत्यक्षस्यादृष्टत्वात् इति वाच्यम्, सामान्यलक्षणायाः सर्वत्राश्रयग्राहकत्वस्यैव दृष्टत्वेनात्रादृष्टचरकल्पनाया असंभवात्। ननु तथापि विशिष्टबुद्धिं प्रति विशेषणज्ञानं कारणमिति क्लृप्तकार्यकारणभावेनैव सुरभिचन्दनखण्डमिति प्रत्यक्षं सौरभस्मरणेनैवोपपद्यते इति ज्ञानलक्षणायाः प्रत्यक्षं प्रति कारणत्वान्तरकल्पनं वृथेति चेन्न—विशेषणज्ञानस्य विशिष्टबुद्धिं प्रति कारणत्वेऽपि विशिष्टप्रत्यक्षं प्रत्यकारणत्वात्। किञ्च, यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूमत्वेन धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणयैव, तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसंबन्धेन धूलीपटलेऽभावेन सामान्यलक्षणयाऽनुव्यवसाये धूलीपटलभानासंभवात्। किञ्चान्यथाख्यातिवादिनये इदं रजतमित्यादिभ्रमस्थले सर्वत्रैवान्यधर्मस्यान्यत्र प्रत्यक्षं न स्यात्, रजतत्वादिधर्मस्य तदानीमिन्द्रियसंनिकृष्टत्वाभावादतो भ्रमनिर्वाहार्थं ज्ञानलक्षणाप्रत्यासत्तिः स्वीकार्यैव।

योगजधर्मविशेषो योगाभ्यासजनितः श्रुतिस्मृतिपुराणादिप्रतिपाद्यो योगिनामतीतानागतव्यवहितविप्रकृष्टादिप्रत्यक्षहेतुः। परन्तु मीमांसकैर्योगज्ञानस्यास्मदादिप्रातिभज्ञानवल्लिङ्गाद्याभासजन्यत्वेन प्रामाण्यं नैव स्वीक्रियते।

तदुक्तं श्लोकवार्तिके प्रत्यक्षसूत्रे—

लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी।
न निश्चयाय पर्याप्ता तथा स्याद् योगिनामपि ॥ ३२ ॥

बौद्धास्तु सर्वज्ञं बुद्धं कल्पयन्तो योगजं प्रत्यक्षं स्वीकुर्वन्त्येव। अतएव—

अतीतानागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥

इति प्रत्यक्षसूत्रस्थश्लोकवार्तिकं व्याचक्षाणेन न्यायरत्नाकरकृता—योगिनां हि भावनाबलजप्रत्यक्षं सकलातीतानागतसूक्ष्मादिविषयं धर्माधर्मावपि गोचरयतीति शाक्यादयो मन्यन्ते। स्वभावत एवात्मानः सर्वज्ञाः, ते देहावरणेनावृतज्ञानाः किञ्चिदेवेन्द्रियादिवशेन जानन्ति। निर्मुक्तदेहावरणास्तु मुक्ताः सर्वमनागतादि जानन्तीत्यार्हताः—इत्युक्तम्। १७

युक्तस्य योगजधर्मसहायेन मनसाऽऽकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवति। युञ्जानस्य तु ध्यानविशेषोऽपि योगजधर्मस्य सहकारीति ध्यानकाले एव तादृशं ज्ञानं नान्यदिति भेदः। इदं तु विज्ञेयम्—द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि तु घ्राणरसनश्रवणानि गुणग्राहकाणि इति।

वेदान्तिनस्तु समवायानङ्गीकारेण संयोग-संयुक्ततादात्म्य-संयुक्ततादात्म्यवत्तादात्म्ये-त्यादिसंबन्धपञ्चकं स्वीकुर्वन्ति। विशेषणविशेष्यभावस्तु षष्ठो न स्वीक्रियते। तथाहि—अभाव-प्रत्यक्षमनुपलब्धिरूपमानान्तरजन्यं न तु चक्षुरादिप्रमाणजन्यम्, अभावस्य द्रव्याद्यनात्मकस्य चक्षुरादिना सह संयोगसंयुक्ततादात्म्यादिरूपसंबन्धपञ्चकासंभवात्। नच तथापि चक्षुःसंयुक्त-विशेषणत्वादिरूपः संबन्धः संभवत्येवेति वाच्यम्। तस्य प्रत्यक्षनियामकसंबन्धरूपत्वासंभ-वात्। अन्यथाऽनुमानोच्छेदप्रसङ्गात्। पर्वतो वह्निमानित्यनुमितावपि चक्षुःसंयुक्तपर्वतविशेषण-तयैव वह्नेः प्रत्यक्षसंभवात्। तथाच घटाभाववद्भूतलमित्यादि प्रत्यक्षं न घटाभावांशे चाक्षुषं किन्त्वनुपलब्धिरूपमानान्तरजन्यमेव। मानान्तरस्य चाभावप्रत्यक्षं प्रति कारणत्वं पृथगेव तृणा-रणिमणिन्यायेन। चक्षुराद्यन्वयव्यतिरेकानुविधानं तु अधिष्ठानप्रत्यक्ष एवोपक्षीणम्, तथा सामा-न्यलक्षणाऽपि नेन्द्रियप्रत्यासत्तिः, मानाभावात्। नच महानसीयधूमे इन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यात्, सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे पर्वतीयधूम-स्यापि प्रत्यासन्नत्वात्तत्र व्याप्तिग्रहे ततोऽनुमितिरिति वाच्यम्। पर्वतीयधूमे इन्द्रियसंनिकर्षदशायां धूमत्वेन प्रकारेण गृहीतस्मृतव्याप्तेस्तत्रानुमितिरूपवैशिष्ट्यग्रहसंभवात्। सुरभि चन्दन-मितिवत् विशेष्येन्द्रियसंनिकर्षविशेषणज्ञानासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः पूर्णत्वात्। व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मता ज्ञानस्य हेतुता। तथाहि—महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति, धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्, तच्च सामान्यलक्षणां विनैव तावतैवानुमितिसिद्धेः। नच सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी नवेति अनुभूयमान-संशयो न स्यात्, प्रसिद्धधूमे वह्निसंबन्धागमात्, अप्रसिद्धस्य चाज्ञानात् इति वाच्यम्। प्रसिद्ध-धूम एव तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः। तथा चोक्तं मणिकृताऽपि—'घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशयसिषाधयिषे भवत एवेति'। ननु सिद्धे नेच्छा; किन्तु असिद्धे, सा च स्वसमानविषयकज्ञानजन्या, तच्च ज्ञानं न सामान्यप्रत्यासत्तिं विना, समा-

 नविषयकज्ञानञ्च समानप्रकारकत्वे सति समानविशेष्यकं ग्राह्यम्। अन्यथा रजतत्वेन प्रकारेण रजतेऽनुभूयमाने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात् इति चेन्न—ज्ञाननिष्ठस्य समानप्रकारकत्वमात्र-

स्येच्छानियामकत्वेन सिद्धविषयकसुखत्वप्रकारकज्ञानादेव अज्ञाते सुखे इच्छोपपत्तेः। इच्छाविषयनिष्ठज्ञानप्रकाराश्रयत्वस्यापि इच्छानियामकत्वस्वीकारेण रजतत्वेन प्रकारेण रजतेऽनुभूयमाने सति घटादौ रजतत्वप्रकारकेच्छाया अभावः। इदं रजतमिति भ्रमस्थले तु अनिर्वचनीये रजते रजतार्थिनः इच्छाधीना प्रवृत्तिरिति प्रकाराश्रयत्वमव्याहतमेव।

ननु अभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशकयावत्तेजोऽभावरूपस्य तमसः प्रत्यक्षं न स्यात्, सामान्यप्रत्यासत्तिं विना यावत्तेजोज्ञानासंभवादिति चेन्न। अस्मन्मते तमसोभावान्तरत्वात्। तादृशतेजःसामान्याभावस्य तमोव्यञ्जकत्वमपि स्वरूपसत एव न तु ज्ञातस्येति न तत्रापि सामान्यप्रत्यासत्त्यपेक्षा। न च गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यं तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति वाच्यम्। यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वात्। तथाहि—गोत्वं नास्ति इत्यभावे समवेतत्वसंबन्धेन यत्किञ्चिद्गोव्यक्तिरेव प्रतियोगितावच्छेदिका, तथाच यथा घटो नास्ति इति ज्ञाने घटसामान्याभावस्य सर्वघटप्रतियोगिकस्यापि विशेषणतया [1]कश्चिदेव घटो भाति तथा गोत्वं नास्ति इति ज्ञाने सकलगोव्यक्त्यवच्छिन्नप्रतियोगिताकेऽपि गोत्वाभावे प्रतियोगितावच्छेदकतया भासमानेन केनचिद् गवा विशिष्टं गोत्वं विशेषणम्, न तु सर्वैर्गोभिः। ननु अनुमितेर्विशिष्टबुद्धित्वादविशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः, तया विना पर्वतीयवह्निरूपविशेषणस्य ज्ञानासंभवात्। न चानुमानान्तराद् विशेषणज्ञानसिद्धिः, अनवस्थानादिति चेन्न। विशेषणतावच्छेदकप्रकारकज्ञानादेव वह्नित्वप्रकारकयत्किञ्चिद्वह्निविशेष्यकज्ञानरूपात्—साध्यविशेषणकपक्षविशेष्यकानुमितिसंभवात्। किञ्च धूमत्वादिसामान्यं न स्वरूपतः प्रत्यासत्तिः, धूलीपटले धूमभ्रमानन्तरं धूमत्वेन सकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसङ्गात्, तत्र स्वरूपतो धूमत्वाभावात्। न चेष्टापत्तिः, तदुत्तरकालमनुमित्यनुदयापत्तेः, तथाच धूमत्वज्ञानं प्रत्यासत्तिरिति वाच्यम्, तच्च धूमेन्द्रियसंनिकर्षदशायां धूमज्ञानात्प्राङ् नास्त्येव, निर्विकल्पके मानाभावात्। विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्यकारणभावानभ्युपगमात्, अवश्यक्लृप्तकार्य-

(१) प्रतियोगित्वेन भानं सर्वघटानां विशेषणत्वेन भानं तु कस्यचिदेव घटस्येति अनुभवमाश्रित्योच्यते। प्रतियोगित्वं निरूपकत्वरूपः स्वरूपसंबन्धविशेषः, विशेषणत्वं तु विद्यमानत्वे सति व्यावर्तकत्वमिति विशेषः।

कारणभावविशेषेणैव सर्वव्यवहारोपपत्तेः। न च धूमत्वेन संनिकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारकमसंनिकृष्टधूमविषयकं ज्ञानान्तरमुत्पद्यते इत्यत्र मानमस्ति। धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि न व्यवहितमित्यनुभवाच्च। अन्यथा जगतीगतसकलधूमव्यक्तीरहं साक्षात्करोमीत्यनुव्यवसीयेत। नचैवमनुभवमात्रशरणैरभ्युपेयते। किञ्च सामान्यप्रत्यासत्त्यङ्गीकारे 'यत्प्रमेयं तदभिधेयम्, यत्प्रमेयवत्तदभिधेयवत्' इत्यादिव्याप्तिपरिच्छेदे सार्वज्ञ्यापत्तिः। न चेष्टैव सा, परज्ञानविषयो घटो नवेत्यादि-संशयानुपपत्तेः। न च घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी प्रमेयमिति निश्चयस्तु घटविषयकोऽपि न घटत्वप्रकारक इति वाच्यम्। भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वात्। घटत्वस्यापि प्रमेयमिति ज्ञाने भासमाने वैशिष्ट्यप्रतियोगित्वात्।

ज्ञानलक्षणप्रत्यासत्तिरपि वेदान्तिभिर्नाद्रियते। तथाहिः—सुरभिचन्दनखण्डमिति ज्ञानं चन्दनखण्डांशे चाक्षुषप्रत्यक्षरूपं, सौरभांशे तु अनुमितिरूपं परोक्षम्। तत्र चन्दनत्वमेव हेतुः। अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेः प्रत्यक्षपक्षकानुमानमात्रोच्छेदप्रसङ्गः। परोक्षापरोक्षवृत्तिद्वये प्रतिबिम्बितं चैतन्यमेकमेवेति ज्ञानैकत्वोपपत्तिः। नचैकस्मिन् ज्ञाने परोक्षत्वापरोक्षत्वोभयसत्त्वे परोक्षत्वापरोक्षत्वरूपजातिबाधकः संकरः प्राप्नोतीति वाच्यम्। जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतयाऽस्माभिरनभ्युपगमात्। नापि इदं रजतमित्यादिभ्रमसिद्ध्यर्थं ज्ञानलक्षणाप्रत्यासत्तिरभ्युपेया। रजतप्रत्यक्षमात्रे रजतसंयोगत्वेन कारणत्वावधारणात्, संनिकर्षान्तरसत्त्वेऽपि रजतसंयोगाभावे रजतप्रत्यक्षोत्पत्तेर्वक्तुमशक्यत्वात्। नच लौकिकप्रमारूपप्रत्यक्ष एव तस्य कारणत्वमिति वाच्यम्। अस्य विभागस्य स्वशिष्यानेव प्रत्युचितत्वात्, गौरवकरत्वात्, निर्विकल्पकसाधारण्याभावाच्च ज्ञानरूपसंनिकर्षस्य। रजतेन्द्रियसंनिकर्षजस्य च रजते रजतत्वप्रकारकज्ञानस्य भ्रमत्वानुपपत्तेश्च। तस्माद् इदमिति इन्द्रियसंनिकर्षजन्यम्, रजतमिति तु [1]स्मृतिरूपमविद्यावृत्त्यात्मकं ज्ञानमनिर्वचनीयत्वात्। इत्थञ्चात्रापि वृत्तिद्वयम्, चैतन्यन्तूभयत्रापि एकमेवेति नाख्यातिवादिमतप्रवेशः। तथा च भ्रमस्थले रजतभाविद्यकं साक्षिभास्यं नैन्द्रियकमिति नेन्द्रियसंनिकर्षापेक्षा तत्प्रत्यक्षत्वाय। योगजप्रत्यक्षन्तु वेदान्तिभिरपि स्वीक्रियते एव।



१ स्मृते रूपमिवासंनिहितविषयकत्वरूपमस्येत्यर्थः। न तु वस्तुतः स्मृत्यात्मकमेवेत्यर्थः प्रत्यक्षाभासत्वाभ्युपगमात्।

बौद्धा अपि सामान्यानङ्गीकारात्सामान्यलक्षणामपि नाद्रियन्ते । चार्वाकमतेऽपि न सामान्यलक्षणाप्रत्यासत्तिः । तथाहि—अनुमानप्रमाणखण्डनावसरे उक्तं तैः 'व्याप्तिः सत्तया चक्षुरादिवन्नाङ्गभावं भजते, किन्तु ज्ञाततया, कः खलु ज्ञानोपायो भवेत् । न तावत्प्रत्यक्षं तच्च बाह्यमाभ्यन्तरं वाऽभिमतम् । न प्रथमः; तस्य संप्रयुक्तमात्रविषयकज्ञानजनकत्वेन भवतिप्रसर-संभवेऽपि भूतभविष्यतोस्तदसंभवेन सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् । न च व्याप्तिज्ञानं सामान्यगोचरमिति वाच्यम्—व्यक्त्योरविनाभावाभावप्रसङ्गात् । नापि चरमः—अन्तःकरणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेरिति । वैशेषिकमतं तु समानतन्त्रत्वा-न्नैयायिकमतवत्, इति पृथङ् न विवेचितम् । मीमांसकमते तु सामान्यलक्षणाप्रत्यासत्तिविषये 'व्यवहारे भट्टनय'इति प्रवादानुसारेण वेदान्तिवदेव । भ्रमस्थले तु अनिर्वचनीयख्यात्यनभ्यु-पगमेन नैयायिकवदेवान्यथाख्यात्यभ्युपगमेन च ज्ञानस्य संस्कारस्य वा प्रत्यासत्तित्वमा-वश्यकम्, इन्द्रियाणां प्राप्यकारित्वस्वीकारात् । इति प्रत्यक्षोपयोगिसंनिकर्षविषये संक्षेपतो मतानि प्रदर्शितानि । वस्तुतस्तु अद्वैतिमते सर्वसामञ्जस्याल्लाघवाच्च संनिकर्षपञ्चकमेवाभ्यु-पेयमिति भाति ।

---




# पञ्चांगस्य दृश्यत्वम्

पं० बलदेवमिश्रः

( सरस्वती भवन, काशी )

( अनुवृत्तः )

## पञ्चाङ्गविषये विवादः

अथेदानीं 'पञ्चाङ्गविषये' बहवो विवादाः तन्निर्णयाय यत्र तत्र समितिश्च कृता दृश्यते, तत्र कीदृशो विवादः कथं च तस्य निर्णयः समुचित इति तावत् प्रतिपाद्यते। अत्र प्रायो दृश्यगणितमानिन एव आक्षेपकाराः। तेषां मते सिद्धान्तगणिततो वा करणग्रन्थतो वा सारणीतो वा उपलब्धाः सर्वे ग्रहाः स्थूलाः। अत एव सर्वं पञ्चाङ्गमेव स्थूलम्।

( १ ) तत्र तैरिदं कथ्यते यदस्मदीयग्रन्थे एकस्मिन् वर्षे यानि सावनदिनानि तानि न वास्तवानि। यत आचार्याणां न मतैक्यं तथा येन विधिना तानि दिनानि गणितानि तत्रापि स्थूलता। तेन वास्तवं वर्षमानं ग्राह्यम्।

( २ ) तत्र प्राचीनसिद्धान्ते गणना रेवतीनक्षत्रान्ततः क्रियते। रेवती तारा न सप्रकाशा, न चापि तस्याः क्रान्तिवृत्तौ स्थितिः तस्याः शरोऽस्ति अतो रेवतीतो गणना न समुचिता। आकाशे चित्रा प्रकाशवती तारा, यस्याः स्थितिः रेवत्यन्ततः अशीत्यधिकशतांशे १८०° विद्यते अतश्चित्रातो गणना कर्त्तव्या।

( ३ ) वेधतो ये ग्रहाः समुपलभ्यन्ते ते नाड़ीक्रान्तिवृत्तसंपातत आयान्ति। अतो रेवत्यन्तत आनयनाय तत्रायनांशानां संस्कारः क्रियते। तत्रायनांशाः कति तत्रैव न सामञ्जस्यमत एवायनांशाः सूक्ष्मा वेधोपलब्धा ग्राह्याः।

( ४ ) दृश्यगणिततो ग्रहणं, उदयास्तौ, चन्द्रशृङ्गोन्नत्यादि सर्वं दृश्यवस्तु आकाशे यथावदवलोक्यते, अतः सर्वं दृश्यगणितं साधु, तेन सर्वथा तत्स्वीकरणीयम्। अत्र न काचिद्-युक्तिर्दृश्यते यत् प्रत्यक्षं दृश्यगणितं न स्वीकरणीयं तथा अप्रत्यक्षं करणगणितं मान्यम्।

( ५ ) सर्वे प्राचीना आचार्याः स्वमतपोषणाय दृग्गणितैक्यस्यैव बलं स्वीकुर्वन्ति स्वीयग्रन्थे, तदिदानीन्तनैः कथं तदेव स्फुटं दृक्प्रत्ययकरं गणितं न स्वीक्रियते।

( ६ ) अतो विद्वद्भिरेकीभूय सत्यपथमवलम्ब्य दृश्यगणितं स्वीकरणीयम्।

दृश्यगणिताभिमानिनामेष एव पक्षः, इदमेव च वक्तव्यम्।

अत्र सिद्धान्तमतावलम्बिनां तावदुत्तरम्—

प्राचीनसिद्धान्तकारैर्येनैव मानेन वर्षमानं निर्णीतं तेनैव मानेन कल्पे महायुगे वा भगणाः पठिताः, अतो ग्रहानयने न कदाचिद्विरोधः। प्राचीनसिद्धान्तरीत्या भगणमानतः ग्रहादीनां साधनं भवति, युगमन्वन्तरमनपेक्ष्य या गणना सा न प्राह्येति ब्रह्मगुप्तः स्वीये ग्रन्थे जगाद।

"युगमन्वन्तरकल्पाः कालपरिच्छेदकाः स्मृतावुक्ताः।
यस्मान्नरोमके ते स्मृतिबाह्यो रोमकस्तस्मात्॥".

तेन प्रकाशवती तारा चित्रा भवतु रेवती वा, तत्र न किञ्चित्प्रयोजनं प्रकाशवत्याः तारायाः चित्रैव यदि प्रकाशवती तारा भवेत्तथापि तत्र १८०° अंशान् संयोज्य रेवत्यन्ततो ग्रहा ज्ञेया। वर्षमानस्य मूलबिन्दोश्चापि निर्णयस्य न किञ्चित्प्रयोजनम्। दृश्यगणिते तु युगभगणाभावः, सर्वं वस्तु वेधेनैव प्रत्यक्षतः साध्यते, तेन वर्षमानस्य मूलबिन्दोश्चावश्यकता भवति तत्र।

## अयनांशः

अयनांशनिश्चयः सर्वथोपादेयः। यतो लग्नादिसाधने चरक्रान्त्यादिसाधने च अयनांश-संस्कारस्य प्रयोजनम्। अत्र विषये बहु वक्तव्यमस्ति। प्राचीनज्यौतिषसिद्धान्तग्रन्थे अयनांश-चर्चा कुत्रापि नास्ति। वराहमिहिरार्यभटब्रह्मगुप्तसिद्धान्तग्रन्थे अयनांशचर्चैव नास्ति यतस्तदानीं काले अयनांशाभाव एव आसीत्। भावश्चेदल्पत्वादनुपलब्धिरेवासीत्। भास्कराचार्यसमय अयनांशा उपलब्धाः, परन्तु ते कति आसन् इति तेन न लिखितम्। अयनांशविषये भास्कराचार्यस्य कथनं यथाः—

"न हि क्रान्तिपातो नास्तीति वक्तुं शक्यते। प्रत्यक्षेण तस्योपलब्धत्वात्। उपलब्धिप्रकारमग्रे वक्ष्यति। तत् कथं ब्रह्मगुप्तादिभिर्निपुणैरपि नोक्त इति चेत्, तदा स्वल्पत्वात् तैर्नोपलब्धः। इदानीं बहुत्वात् साम्प्रतिकैरुपलब्धः। अत एव तस्य गतिरस्तीत्यवगतम्।...... तर्हि साम्प्रतिकोपलब्ध्यनुसारिणी कापि गतिरङ्गीकर्त्तव्या। यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पत्स्यन्ते। ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति। अत एवायं गणितस्कन्धो महामतिमद्भिर्धृतः सन्ननाद्यन्तेऽपि काले खिलत्वं न याति। अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत् सूर्यसिद्धान्तोक्ताः। तथा मुञ्जालाद्यैर्यदयनचलनमुक्तं स एवायं क्रान्तिपातः। ते गोऽङ्गर्तुनन्दगोचन्द्रा १९९६६९ उत्पद्यन्ते। अथ च ये वा ते वा भगणा भवन्तु। यदा येंऽशा निपुणैरुपलभ्यन्ते तदा स एव क्रान्तिपात इत्यर्थः।"

एतेन श्रीभास्करेणापि वेधेन येन केनापि विधिना वा तदानीन्तना अयनांशाः न प्रतिपादिताः। तेनापि स भारः ब्रह्मगुप्तसमानधर्माणां भविष्यज्ज्यौतिषाचार्याणामुपर्येव विन्यस्तः। वस्तुतः कल्पे अयनांशभगणमाने सौरमुञ्जालयोः महदन्तरं समीक्ष्यैव भास्कराचार्यस्य अयनांशनिर्णयेऽनुत्साहो जात इति प्रतीयते, अन्यथा अयनांशज्ञानाय स्वयमुपपत्तिं प्रदर्श्यापि तेनात्र तस्मिन् विषये निश्चयो न कृतः।

अयनांशानयनाय तावद्भास्कराचार्यस्य एष साधुः प्रकारः—समायां भूमावभीष्टकर्कटकेन वृत्तमालिख्य तच्चक्रकलाङ्कितं ध्रुवविलोकनादिना सम्यग्दिगङ्कितं च कृत्वा दिङ्मध्ये ऋजुः सूक्ष्मः कीलकश्च निवेश्यः। प्रातः पश्चिमभागस्थो द्रष्टा करकलितावलम्बकसूत्रेण तेन च कीलकेन प्रत्यहमर्धोदितमादित्यं विध्वा त्रिज्यावृत्तस्य प्राग्विभागे तत्र तत्र चिह्नानि कुर्यात्। एवं विध्यता यस्मिन् दिने सम्यक् प्राच्यां रविरुदितो दृष्टस्तद्विषुवद्दिनम्। तस्मिन् दिने गणितेन स्फुटो रविः कार्यः। तस्य रवेर्मेषादेश्च यदन्तरं तेऽयनांशा ज्ञेयाः। एवमुत्तरगमने सति। दक्षिणे तु तस्यार्कस्य तुलादेश्चान्तरमयनांशाः। एवं प्रतिदिनवेधेनोत्तरां परमां काष्ठां प्राप्य यस्मिन् दिने दक्षिणत उच्चलन् दृष्टस्तदयनं दिनम्। ततः प्रभृति दक्षिणगमनम्, तस्मिंश्च दिने गणितेन रविः स्फुटः कार्यः, तस्य त्रिभेण सहान्तरेऽपि तावन्त एवायनांशा भवन्ति। एवं दक्षिणां परमां काष्ठां प्राप्य निवृत्तो दृष्टस्तदुत्तरायणं दिनम्। ततः प्रभृत्युत्तरगमनमित्यर्थः।"

भास्कराचार्येण वृद्धावस्थायां ११०५ शके यत्करणकुतूहलनामकं करणं निर्मितं, तदवलोकनेन ११ अंशाः तदानीन्तना अयनांशाः सिध्यन्ति। तदा गणनया एकस्मिन् वर्षे अयनांशमतिः एककलासन्ना, मुञ्जालमगणानुसारेण ५४ विकला वार्षिकी गतिः। गणेशदैवज्ञमतेनापि ४०४ शके अयनांशाभावः प्रत्येकवर्षे च एककला गतिः। श्रीमद्विवापूदेवशास्त्रिवर्यैर्यदा सायनपञ्चाङ्गं निर्मितं तदा सायनगणनाया एव प्राधान्यं तैः स्वीकृतम्। वास्तवायनांशज्ञानेऽत्र काठिन्यं तैः प्रदर्शितम्। तच्छिष्येण गोविन्दशास्त्रिणा स्वीये सायनवादे लिखितं "मन्ये इमां गौणीमपि निरयणगणनां स्वीकुर्वन्तु लोका यदि ते राशिचक्रमूलभूतं निरयणमेषादिं निश्चिनुयुः, सति कुड्ये चित्रमिति न्यायात्, परमयं निरयणमेषादिः कथमपि निर्णेतुं न शक्यते"। पश्चात् शास्त्रिवर्यैर्यदा निरयनगणना स्वीकृता, तदाऽयनांशस्य प्रयोजनं जातम्, तदा सिद्धान्तग्रन्थेभ्यो यो निरयनः सूर्यः समागच्छति तथा यूरपपञ्चाङ्गतः अथवा वेधतः यः सायनः सूर्यस्तयोरन्तरमेवायनांशान् गृहीत्वा पञ्चाङ्गं निर्मितम्। एवमयनांशविषये न मतैक्यम्, अत्र विषये भास्कराचार्यरीत्या अयनांशाः साध्याः स्वीकरणीयाश्च।

अथ दृश्यगणितं स्वीकुर्वतामेष आक्षेपः यत्प्राचीनमतानुयायिभिरपि सर्वं दृश्यगणितं ग्रहणोदयास्तादिकं दृश्यगणितमार्गेणैव स्वीक्रियते तदाऽदृश्यं वस्तु तिथ्यादिसाधनमपि तेनैव विधिना कथं न स्वीक्रियते। अत्रेदं कथनीयमस्ति यज्ज्योतिःशास्त्रं स्वतन्त्रं तत्र सर्वं प्रत्यक्षोपलब्धमेव मान्यं, किन्तु पञ्चाङ्गं यच्च ज्यौतिषशास्त्रप्रतिपादितगणितबलेनैव विरच्यते तन्नस्वतन्त्रम्। एतत्पञ्चाङ्गं धार्मिकम्। अस्मदादीनां सर्वं व्रतयज्ञादिधर्मकृत्यं पञ्चाङ्गेनैव स्वीक्रियते। धर्मकृत्याद्यनुष्ठाने तु शास्त्रं ऋषिवाक्यमेव प्रमाणम्। तत्र पञ्चाङ्गविषये शास्त्रकाराणां स्पष्टं द्विविधं मतमुपलभ्यते, प्रथमं तु दृश्यवस्तुसाधने यथा दृश्यं स्पष्टं भवेत्तथा तस्य ग्रहणम्; अदृश्यवस्तुसाधने तु नैष नियमः, किन्तु प्राचीनशास्त्रप्रतिपादितमेव मतं ग्राह्यं न संस्कृतमिति।

तत्र तावत्प्रमाणानि—

तिथ्यन्तनाडीनतबाहुमौर्व्या लब्ध्यार्कशीतांशुफले विनिघ्ने।
क्रमेण भक्ते नखगोसमुद्रैः कङ्काग्निवेदैः फलहीनयुक्तः॥
प्राक्पश्चिमस्थस्तरणिर्विधुः प्राग्गुणे फले युक्त इतोऽन्यथोनः।
मुहुः स्फुटाऽतो ग्रहणे रवीन्द्वोस्तिथिस्त्विदं जिष्णुसुतो जगाद॥ २५

एतेन केवलं ग्रहणस्य स्फुटतासाधनार्थं तिथौ विशेषः संस्कारः प्रदत्तोब्रह्मगुप्तेन

अत्र वासनाभाष्ये भास्कराचार्यः चतुर्वेदाचार्येणाप्यत्रोपलब्धिरेव वासनाऽभिहिता। यदीदृश्युपलब्धिस्तर्हि अस्माभिः किमु नाङ्गीकर्त्तव्या।

एवं सूर्यग्रहणसाधने भास्कराचार्यः—

शशिदृक्क्षेपार्थं यद्वित्रिभलग्नेपुणात्र संस्करणम्।
जिष्णुजमतं तदुक्तं न मन्मतं वच्मि युक्तिमिह॥

एतेन वास्तवसूर्यग्रहणसाधने ब्रह्मगुप्ततोऽपि विशेषोऽभिहितः।

एवं पुनः शृङ्गोन्नतौ भास्कराचार्यः—

यौ ब्रह्मगुप्तकथितौ किल कोटिकर्णौ ताभ्यां कृते तु परिलेखविधौ यथोक्ते।
नास्तीव भाति मम दृग्गणितैक्यमत्र शृङ्गोन्नतौ सुगणकैर्निपुणं विलोक्यम्॥
शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्तच्छायादिकं परिधिना घटतेऽमुना हि।
नान्येन तेन जगुरुक्तमहीप्रमाणप्रामाण्यमन्वययुजा व्यतिरेककेण॥

इत्यनेन गोलाध्यायस्थवचनेन अन्वयव्यतिरेकाभ्यां प्रमाणाभ्यां शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्तच्छायादिनैव भूपरिधेः स्फुटत्वं प्रतिपादितम्, यत एषु विषयेषु प्रत्यक्षमेव प्रमाणम्।

एतेन दृश्ये शृङ्गोन्नतौ विशेषप्रकारः कथितः। अतएव दृश्यगणिते यथा दृग्गणितैक्यं भवेत्तथा संस्कारो देयः इत्येव पूर्वाचार्याणां मतम्। परन्तु अदृश्यगणिततिथ्यादिसाधने पूर्वाचार्याणां कथनं श्रूयताम्।

मुञ्जालाचार्यकथितलघुमानसकरणे नवीनः संस्कारः प्रदत्तः, तद्यथा—

"इन्दूच्चोनार्ककोटिघ्ना गत्यंशा विभवा विधोः।
गुणो व्यर्केन्दुदोः कोट्योो रूपपञ्चाप्तयोः क्रमात्॥
फले शशाङ्कतद्गत्योर्लिप्ताद्ये स्वर्णयोर्वधे।
ऋणं चन्द्रे धनं भुक्तौ स्वर्णसाम्यवधेऽन्यथा॥"

२६ अत्र व्याख्याकारो लिखति—"अयं संस्कारस्तिथिभयोगसाधने न क्रियते पूर्वैरुपेक्षितत्वात्" एवं ब्रह्मगुप्तकृतस्य ब्राह्मस्फुटसिद्धान्तस्य—

"संसाध्य स्पष्टतरं बीजं नलिकादियन्त्रेण ।
तत्संस्कृतग्रहेभ्यः कर्त्तव्यौ निर्णयादेशौ ॥"

अस्य श्लोकस्य टीकायां चतुर्वेदाचार्यः पृथूदकस्वामी भास्कराचार्यतोऽपि प्राचीनो लिखति—

"प्रत्यहं तिथिनक्षत्रयोगस्यानयने विधुः ।
अबीजसंस्कृतो ग्राह्यो ग्रहणादौ सबीजकः ॥
यन्त्रवेधादिना ज्ञातं यत्पूर्वं गणकैस्ततः ।
ग्रहणादि परीक्ष्येत न तिथ्यादि कदाचन ॥"

शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्तच्छायानिरीक्षणविधावुदये प्रदेयम् ।
बीजं फलं तिथिभयोगविधौ न देयं चन्द्रे प्रदेयमखिले क्षितिजादिकेषु ॥

तथात्र कमलाकरः—

"अदृष्टफलसिद्ध्यर्थं यथार्काद्युक्तितः कुरु ।
गणितं यद्धि दृष्ट्यर्थं तद् दृष्ट्युद्भवतः सदा ॥"

एभिर्वचनैः स्पष्टं प्रतीयते यत् तिथिभयोगाः प्राचीनगणनया एव स्वीकार्याः, तत्रापि स्फुटतामिलषिता चेत्तदा कथं न तत्र लम्बनसंस्कारः दृक्कर्मसंस्कारश्च प्रदत्तः । एतेन तिथिभयोग-साधने प्रचलिता रीतिः शोभना ।

ग्रहणादौ यतः स्पष्टतया साधनेनैव दृश्यत्वं फलप्रदत्वं च, तेन ग्रहणादिकं दृष्टियोग्यं प्रसाधनीयमन्यथा दिवा चन्द्रग्रहणं रात्रौ सूर्यग्रहणं कथं पर्वरूपेण न स्वीक्रियते । अत्र विषये सन्त्यनेकानि स्पष्टवचनानि ।

वृद्धवसिष्ठः— "सर्वेषामेव वर्णानां सूतकं राहुदर्शनम् ।
सचैलं तु भवेत् स्नानं सूतकान्नं विवर्जयेत् ॥"

एभिर्वचनैरिदं स्पष्टं यद् ग्रहणं दृष्ट्वा स्नानजपहोमादिकरणे फलम्, अन्यथा न । अत्र दृश्यमतानुयायिनोऽपि स्वमतपोषणाय कानिचिद्वचनानि प्रक्षिपन्ति कुत्रचिच्च प्रमाणानां विशेषार्थं स्वीयमते उपन्यस्यन्ति, तेषामपि समालोचनात्र समुचिता ।

वसिष्ठः— "यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् ।
दृश्यते तेन पक्षेण कुर्यात् तिथ्यादिसाधनम् ॥"

इदं वचनं वसिष्ठसिद्धान्ते नोपलभ्यते । वसिष्ठसिद्धान्तानुसारेण विष्णुचन्द्रेण यः सिद्धान्तः लिखितः तस्यैवेदं वचनं प्रायः, परन्तु विष्णुचन्द्रकृतः सिद्धान्त इदानीं नोपलभ्यते ।

जातकपद्धतौ केशवः—"यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेद्योऽथ खेटाः स्फुटाः ।
यत्पक्षे हि घटन्त उद्गम इहास्तर्क्षं सपङ्मः स च" ॥

अत्र प्रौढमनोरमायां टीकायां दिवाकरः कमलाकराग्रजो लिखति 'ननु ब्राह्मसौरार्यादिपक्षाणां सत्त्वात् कस्मिन् पक्षे ग्रहाः साध्या इत्यत आह यत्पक्षे हि घटन्त इति । यत्पक्षे यस्मिन् पक्षे हीति निश्चयेन घटन्ते प्रत्यक्षमाकाशे दृश्यन्ते तस्मिन् पक्षे ग्रहाः साध्याः" इत्यर्थः ।

उक्तञ्च दामोदरपद्धतौ—

"यान्ति संसाधिताः खेटा येन दृग्गणितैक्यताम् ।
तेन पक्षेण ते कार्याः स्फुटास्तत्समयोद्भवाः ॥"

एतेन ब्रह्मसौरार्यमटानामेव पक्षः स्वीकृतः ।

सूर्यसिद्धान्ते— शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः ।
युगानां परिवर्त्तेन कालभेदोऽत्र केवलम् ॥

अस्यार्थस्तु एवं क्रियते इदं शास्त्रं तदेव यद् भास्करः पूर्वं प्राह—किन्त्वत्र केवलं कालभेदः अर्थात् कालभेदजन्यमेवान्तरमत्र भवितुं शक्नोति । अत्र गूढार्थप्रकाशे रङ्गनाथः "तथा च कालवशेन ग्रहचारे किञ्चिद्वैलक्षण्यं भवतीति युगान्तरे तत्तदन्तरं ग्रहचारेषु प्रसाध्य तत्कालस्थितलोकव्यवहारार्थं शास्त्रान्तरमिव कृपालुरुक्तवानिति नानन्तरशास्त्राणां वैयर्थ्यम् ।" परञ्च नैषोऽर्थः साधुः । वास्तवार्थस्तु अत्र केवलं कालभेदः अर्थात्तदेव शास्त्रमिदं यत् पूर्वस्मिन् युगे भास्करः प्राह न किञ्चिदन्तरमत्र कालभेदः यातैष्यकालभेदः । अर्थात् सूर्येणान्यस्मिन् समये पूर्वं कथितं मया तु तदेवेदानीं कथ्यत इति न हि कालभेदेन ग्रहगणनायामत्रान्तरं वाच्यम् । "परमत्र कालभेदमात्रं तत् तद्युगस्थमिदमेतद्युगस्थमिति नात्र भगणकृतो भेदार्थः" इति कमलाकरः ।

एवं वसिष्ठसिद्धान्तवचने "इत्थं माण्डव्य संक्षेपादुक्तं शास्त्रं मयोदितम् । विस्रस्ती
२८ रविचन्द्राद्यैर्भविष्यति युगे युगे" 'विस्रस्ती' अर्थात् शिथिलं एवं पाठं कृत्वान्तरं दर्शयति,
परञ्चैष पाठोऽपि न साधुः, विस्रस्तीत्यत्र विस्तृतीति पाठः ।

अत्र सिद्धान्ततत्त्वविवेके कमलाकरः—

"इत्थं माण्डव्य-संक्षेपादिति पद्योत्तरार्धके ।
विस्तृतीत्यत्र कृत्वा तु विस्तृतीति बलान्नराः ॥
नाशयन्ति वसिष्ठोक्तिं चलसृष्टिभ्रमात् स्थिरम् ।
यद्बीजमादृतं धात्रा स्थूलभुक्तिभवं हि तत् ॥
स्थिरसृष्टौ तु तज्ज्ञानं यत्तैस्तज्ज्ञापकैर्ध्रुवम् ।
नास्मादृशां तदज्ञानान्नलिकामात्रतः क्वचित् ॥"

एवं समालोचनया एवं प्रतिभाति यत् पूर्वाचार्याणामिदमेव मतं यत्तिथ्यादीनां साधनं पूर्वोक्तरीत्यैव कार्यं तत्र संस्कारविशेषस्य प्रयोजनं नास्तीति ।

## सायननिरयनविवादः

इदानीं वेधेन ये ग्रहाः सिद्ध्यन्ति ते सायना एव भवन्ति । सायनागणनैव साध्वी इत्येव महामहोपाध्यायानां बापूदेवशास्त्रिणां मतम्, किन्तु सूर्यसिद्धान्तादौ निरयना एव ग्रहाः साधितास्तेन कारणेन शास्त्रिवर्यैरपि निरयनमेव पञ्चाङ्गं निर्मितम् । रामदैवज्ञस्य मुहूर्त्तचिन्तामणेरुपरि महापण्डितेन गोविन्ददैवज्ञेन पीयूषधारानाम्नी टीका विरचिता, तत्र संक्रान्तिप्रकरणे संक्रान्तेः पुण्यकालनिर्णये सायनमतस्यैव समर्थनं दृश्यते ।

तत्र तेन एकं वृद्धवसिष्ठवचनमप्युद्धृतम्—

"चलसंस्कृततिग्मांशोः संक्रमो यः स संक्रमः ।
अजागलस्तन इव राशिसंक्रान्तिरुच्यते ॥"

इदानीमुपलब्धे वशिष्ठग्रन्थे इदं वचनं न लभ्यते ।

धर्मशास्त्रे संक्रमणे फलमुक्तम् कुत्रापि सायनसंक्रमणस्य वचनं नोपलभ्यते, तेन राशिसंक्रमणमेव फलप्रदमिति इदानीन्तना आमनन्ति, तदनुसारमेव दानजपादिधर्मकृत्यमाचरन्ति । परञ्च वस्तुतः धर्माचार्याणां समये अयनांशानामुपलब्धिर्नासीत्, तेन तेषां मनसि एष प्रश्नो नोत्थितः, अन्यथा मेषतुलासंक्रान्त्योर्नाम विषुवसंक्रान्तिः कथं स्यात्, सृष्ट्यादौ अयनांशाभावकाले वा नाडीक्रान्तिवृत्तसंपाते मेषादितुलादिबिन्द्वोः स्थानमासीदित्यत्र न कश्चित् संशयः, अत- २९

एव तस्य विषुवं नाम यतो विषुवद्वृत्तेन सह मेषादेर्योगः। परञ्चेदानीं विषुवचिह्नात् प्रायो २२ द्वाविंशान्तरे मेषादिचिह्नं तथापि तदेव चिह्नं विषुवसंक्रान्तिनाम्ना स्वीक्रियते तदनुरूपमाचरणं यज्ञदानादिकं च क्रियते, तेन निःसंशयं धर्मशास्त्रकाराणां व्यवस्था अयनांशाभावकाले जाता। यद्यपि अयनांशोपलब्धिसमयेऽपि बहुभिर्निबन्धकारैर्निबन्धाः प्रणीताः, परन्तु पूर्वोक्तरीतिमेवानुसृत्य न तैरत्र विषये कश्चित्प्रकाशः प्रदत्तः, इदानीं तु राशिसंक्रमणमेव वास्तवसंक्रमणमिति सर्वे स्वीकुर्वन्ति। वस्तुतश्चलसंक्रान्तेरस्थिरत्वात् चलसंक्रान्तौ पुण्यदातृत्वं नास्तीति।

## फलिते पञ्चाङ्गस्य प्रभावः

श्रीमद्भिर्भास्कराचार्यैर्लिखितं गोलाध्याये—"ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते" वराहमिहिरेणापि लिखितं तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते। होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या, एवं फलादेशकरणं ज्योतिःशास्त्रफलमुक्तम्। स चादेशः लग्नबलाश्रितः, लग्नं स्पष्टखेटाश्रयम्, तेन स्पष्टग्रहमाश्रित्यैव वास्तवं फलं भवतीत्यत्र न कश्चित् संशयः।

सायनमतानुयायिनां मुखान्मया इन्दौरसंमेलने श्रुतं यत्तेषां गणनयैवाऽऽदेशो यथावद्घटते। विश्वविद्यालयत इदानीं यद्विश्वपञ्चाङ्गं निर्मीयते तत्र लिखिताः स्पष्टाः गुरुशनिराहवः अन्यपञ्चाङ्गेभ्यो विसंवादं प्राप्नुवन्ति। तत्रांशादौ बह्वन्तरं भवति। एकदा मया प्रथमविश्वपञ्चाङ्गकार-स्वर्गीय पं० रामयतनशर्मणां मुखात् श्रुतं यत्तदीयपञ्चाङ्गस्थौ शनिराहू वास्तवौ, तत्र प्रमाणं च तैरिदमेव दत्तं यदाभ्यां ग्रहाभ्यामेव वास्तवं कुण्डलीफलं घटते।

इदानीं फलितज्यौतिषमार्त्तण्डाः श्रीदाऊजीदीक्षितमहाशयाः स्वर्गस्थानां राजकीयसंस्कृतकालेजाध्यापकानां हृषीकेशोपाध्यायानां पञ्चाङ्गमेव समर्थयन्ति व्यवहरन्ति च तदीयमेव पञ्चाङ्गं स्वीयफलादेशकथने। युक्तप्रान्तीयशिक्षासचिवेभ्यः श्रीसंपूर्णानन्दमहाशयेभ्यश्च मया श्रुतं यदत्र विषये विवादस्य कथैव नास्ति। दशपुरुषाणां जीवनस्य यथावद्वृत्तं संस्थाप्यं तानि वृत्तानि येन पक्षेण यथावद्विहितानि भवन्ति तत्पक्षीया एव ग्रहाः सद्यः फलानयने स्वीकरणीयाः।

मन्मते गणकानां विश्वास एवात्र सर्वथा मूलं यतः सर्वांशेन केषामपि कथनं यथावद् न भवति। तथा च फलकथने न केवलं ग्रहस्य लग्नस्य वा स्फुटतैवापेक्षिता, किन्तु तत्र विचारोऽपि प्राधान्यमावहति। विचारकरणे त्रुटिश्चेत् तेन स्पष्टग्रहेण किम्, तथा च फलादेष्टॄणामाचार्याणामपि नैकमत्यम्। एवं स्थितौ गणकानां स्वानुभव एवात्र मुख्यं वस्तु।

मन्मते सायनगणनायां फलदातृत्वं नास्ति, यतो जातके भिन्नराशिस्थस्य ग्रहस्य फलं लिखितं विद्यते, सायनगणनायां राशेः स्थिरत्वमेव न स्यात्। अयनांशानां चलितत्वात् एवं सप्तविंशत्ययनांशकाले प्रायः राशीनां भेद एव संपद्यते, अतस्तादृश्यां स्थितौ फलस्य निश्चितत्वं कथं संभवति।

## उपसंहारः

अथोपसंहारे इदमेव वक्तव्यं यद् दृश्यवस्तुसाधने प्राचीनानां नवीनानाञ्च मते नास्ति वैमत्यम्, अर्थाद्येन केनापि प्रकारेण ग्रहणोदयास्तादीनां साधने दृग्गणितैक्यं प्रजायते तथैव साध्यम्। अथ तिथिभयोगसाधने विचारः, तत्र रविचन्द्रावेव मुख्यौ, रविचन्द्रयोः स्पष्टयोरन्तरं यदा द्वादशांशतुल्यं भवति तदैका तिथिः। एवं यदा चन्द्रोऽष्टशतकलां भुंक्ते तदैकनक्षत्रम् तथा रविचन्द्रयोर्योगः यदाष्टशतकलातुल्यो भवेत्तदैवैको योगः। अतस्तिथिनक्षत्रयोगानां साधने रविचन्द्रयोरेव स्फुटताऽपेक्षिता। तत्र स्थूलदृष्ट्यापि रवेः स्फुटतायां न सन्देहः, यतः प्रत्येकस्मिन् वर्षे खीष्टीयजनवरीमासस्य चतुर्दशे दिवसे मकरसंक्रान्तिः तथा अप्रैलमासस्य त्रयोदशदिवसे मेषसंक्रान्तिर्दृश्यते। प्राचीनानां मते साधितः सूर्योऽशुद्धः स्थूलश्चेत्तदा संक्रमणसमये विसंवादो निश्चित एव। "एवं प्राचीनगणनावशतः सिद्धयोरेव रविचन्द्रयोः अमावस्या पूर्णिमा च साध्येते, अमायां सर्वदाऽन्धकारः पूर्णिमायां सर्वा रात्रिरुज्ज्वलेति दृश्यत एव। अशुद्धौ चन्द्रार्कौ चेत्तदा तादृशी प्रत्यक्षघटना असंभवा भवितुमर्हति। अत एतादृशयोश्चन्द्रार्कयोर्वशतस्तिथिनक्षत्रयोगादिकं वास्तवं वास्तवासन्नं वा तेन तिथिनक्षत्रयोगाः प्राचीना एव ग्राह्याः, वास्तवासन्नत्वात् तत्र मुनिवचनप्रामाण्याच्च। भौमादिग्रहाणां साधने तेषामुदयास्तादौ प्राचीनगणनया विसंवादश्चेदर्थात् उदयदिने यदि ग्रहोदयो न दृश्यते तदा येन संस्कारेण तेषामुदयादिकं यथावद्दर्शनार्हं भवति तादृशः संस्कारो देय एव। यतः प्राचीनैरपि बीजसंस्कारः प्रदत्तः, परञ्च गणनायां सारण्याः करणग्रन्थस्योपयोगो न करणीयः। सिद्धान्तग्रन्थप्रदर्शितरीत्यैव गणितं विधेयं येन स्थूलता न संपद्येत। गणितलाघवाय सारणी नितरामपेक्षिता चेत् तत्रापि तादृशः संस्कारो विधेयः येन सारणीसाधितग्रहः सिद्धान्तसाधितग्रहसमो भवेत्। धार्मिककृत्ये प्राचीनरीतेरुच्छेदकरणे नास्ति कस्यापि प्रभुता।

अत्र विषये भगवता बोधायनेनोक्तम्—

"बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः ।
तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये ॥"

प्राचीनसिद्धान्तानां मध्ये कः सिद्धान्तः स्वीकरणीय इत्यत्र यस्मिन् देशे यः सिद्धान्तो मान्यो भवेत्तदनुसारेणैव पञ्चाङ्गं विधेयमिति ।

---




# किमुपकारा उपसर्गाः किमर्थकाश्च

चारुदेवशास्त्री एम. ए., एम. ओ. एल्

उपसर्गार्था यथातथं प्रतिपन्ना बहूपकुर्वन्ति वाचं प्रतिपित्सूनामिति पण्डिताः प्रतिपन्नाः सम्यक्प्रयुक्ताश्चोपसर्गा यथोपस्कुर्वते वाक्यविन्यासस्य न तथेतरत्किञ्चित्। इमे हि यां सुषमां प्रसुवते सा सचेतसां सुमेधसामेव गम्या, यं च वाचि लोकोत्तरं निषिञ्चन्ति रसपीयूषप्रकर्षं सोऽपि तन्मात्रगोचरो न प्राकृतैश्चर्व्यतां याति। न केवलं बन्धस्य सुभगंकरणा उपसर्गा इत्यर्थतः प्रयोगतश्च परिचेतव्याः, प्रयासमपि विनेयानामपकर्षन्तीति सोत्सुक्यं सानुरोधं साभिनिवेशं च तैः परिशील्याः। परिगतोपसर्गार्थश्छात्रो नात्मानं कदर्थयिष्यति परश्शततिङन्तरूपावलिस्मरणेनोद्वेजकेन। अल्पैरेव कैश्चिद् धातुभिरुपसर्गसंहितैः सम्यङ् निर्वक्ष्यति तस्यार्थं इति नेदानीं तस्याऽसकृद्घोषयतो रूपजातमुपदास्यते स्वरः क्षेप्स्यते च कायः। बाढं शब्दसौष्ठवं बन्धस्य तस्येष्टं नैकक्रियोक्तिपाटवं च, तस्योभयस्य कनीयसा यत्नेन चारुतरेण चौपयिकेन प्रसिद्धिर्नासौ फलव्यतिरिक्तिं घटिष्यते। 'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेद्' इति हि लौकिका आभणन्ति। तस्मात्सोपसर्गकाणां धातूनां प्रयुक्तये क्रमेरन्क्षमेरंश्च विद्यार्थिन इति निबन्धने प्रथमं नः प्रयोजनम्। इदं च द्वितीयम्—कस्क उपसर्गः केन केन धातुना सम्प्रयुक्तः प्रयुज्यत इत्यनुक्तोऽप्यर्थः प्रसङ्गात्प्रत्येष्यते। न हि यः कश्चिदुपसर्गो येन केन शक्यो धातुना योक्तुम्। कश्चिदेव तु केनचिदर्हति योगम्। प्रतिनियतविषया हि शब्दा भवन्तीति नात्र प्रायोक्ती विवक्षा प्रभवति। इह च ये च यावन्तश्च यत्र धातौ युक्ताः प्रयोगमवतरन्त्युपसर्गास्ते तावन्तश्चानुक्रान्ता इत्यनुक्तास्तत्र तत्राप्रयोज्या इत्यनुक्तमपि गंस्यते सुधीभिः[1]।

१ क्वचिदस्थान उपसर्गयोगो दृश्यत इति तदात्मकाः प्रमादानां गोचरा अपि ग्रन्थान्ते वितत्य निरूपिताः। उपसर्गवशादकर्मिकाणामपि क्रियाणां सकर्मकत्वं तद्विपर्ययश्चापि तत्रैव दर्शितमिति तत एवावधार्यम्।

५

अनेकार्था हि धातव इति वैयाकरणाः। धातुपारायणेऽर्थनिर्देशो निदर्शनाय कृतो न परिगणनाय। निर्दिष्टार्थेभ्यो व्यतिरिक्ता अपि धात्वर्था भवन्तीत्यभ्युपगमात्। अत एव कलि-वर्ली कामधेनू इति प्रथते प्रामाणिकोक्तिः। किञ्च, धातुपाठेऽन्तरप्यनेकार्थतायां लिङ्गमस्ति। 'कगे नोच्यते, 'वनु च नोच्यते' इति यद्विशिष्यार्थो नोक्तस्तत्र धातूनामनेकार्थता हेतुरिति तद्-व्याख्यातारः। तत्रैव राधोऽकर्मकाद् वृद्धावेवेति च लिङ्गान्तरमस्ति। श्यन्विधानपरमिदं वचनम्। राध-साधसंसिद्धाविति स्वादिषु पठितो राधिर्यदाऽकर्मकस्तदैव श्यन्विकरणः।

एवकारो भिन्नक्रमः। वृद्धावित्यकर्मकत्व उदाहरणम्। यथा वृद्धाविति हि तदर्थः। तेनान्यत्रार्थेऽप्ययमकर्मकः सन् श्यनं लभते, यथा दैवपर्यालोचने—देवदत्ताय राध्यति गर्ग इति। दृश्यन्ते च प्रयोगा अनिर्दिष्टार्थेषु धातूनामिति नैतद्रिक्तं वचः। तद्यथा—वपि बीजसन्ताने पठितश्छेदनेऽपि वर्तते—वपति केशानिति। करोतिः करणेऽभूतप्रादुर्भावे पठितो निर्मलीकरणेऽपि दृश्यते—पृष्ठं कुरु, पादौ कुरु, उन्मृदानेति गम्यते[1]। ईडिः स्तुतौ पठितः प्रेरणायामपि प्रयुज्यते—अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्तीति। चर्चयतिरध्ययने पठितः शास्त्रं चर्चयति। न केवलं चर्चापदानि व्याख्या भवतीति। विलेपनेऽपि वर्तते—चन्दनचर्चितभालः। 'चर्चा चार्चिक्यं स्थासक' इति चामरः। कितिनिर्वासे रोगापनयने च पठितः—निकेतयत्यत्रेति निकेतनं गृहम्। चिकित्सति मन्दं वैद्य इति। ज्ञाननिग्रहनाशननिमन्त्रणेष्वपि दृश्यते—केतयत्यनेनेति केतनं केतुः। शत्रुं चिकित्सति। सस्यार्थे क्षेत्रे तृणानि चिकित्सति। श्राद्धे केतयति विप्रमिति क्रमेणोदाहरणानि। शंसतिः स्तुतौ पठितो हिंसायामपि वर्तते—नृन्शंसति हिनस्तीति नृशंसः। 'नृशंसो घातुकः क्रूर' इति चामरः। कृपू—सामर्थ्ये इत्येवं पठित एष धातुः कर्तनेऽपि व्यवह्रियते—कॢप्तकेशश्मश्रुर्यतिरिति। एवं स्थित उपसर्गैः किं क्रियते। तेन तेन धातुना सहोक्ता उपसर्गास्तत्तद्धात्वन्तर्हितांस्तांस्तानर्थानुद्भावयन्तीत्यत्रैव पर्यवस्यति तेषां कृत्यम्, न कृत्यान्तरमस्ति। तस्मादुपसर्गा द्योतका इति वैयाकरणकृतान्तः। तत्तदर्थोद्भावने सहकारिण उपसर्गा नात्यन्तायापेक्ष्यन्ते। तथा ह्युदुपसृष्टस्तिष्ठतिरूर्ध्वगतौ वर्तते—आसनादुत्तिष्ठतीति। अन्तरेणाप्युदं तमर्थमर्पयन्दृष्टः—अब्राह्मण एष यस्तिष्ठन्मूत्रयतीति भाष्ये। 'न तिष्ठति तु यः



1 इह च दिङ्मात्रमुदाहृतम्। प्रपञ्चस्त्वस्मत्कृतायां प्रस्तावतरङ्गिण्यां 'करोतिना सर्व-धात्वर्थानुवादः क्रियत' इति शीर्षके निबन्धे द्रष्टव्यः।

पूर्वां नोपास्ते यश्च पश्चिमाम्' इति च मनौ। उत्पूर्वः पततिर्विहायसा गतौ दृश्यते—उत्पतोदङ्मुखः खमिति मेघदूते। केवलोऽपि तदर्थः प्रयुज्यते—अशक्या हि गतिर्ज्ञातुं पततां खे पतत्त्रिणामिति कौटलीयेऽर्थशास्त्रे। उपोपसृष्टो नमतिः प्राप्तौ रूढः—सुकृतिनामुपनमन्ति सम्पदोऽनेका इति। विनाप्युपशब्दं तमेवार्थमाचष्टे—मनोनतं वाचि निवेशयन्तीति ( किराते १४।४॥ )। भिदिर्विदारणे रुधादिषु पठितः सम्रुपसृष्टः संयोजने संमिश्रणे वर्तते प्रायेणेतीहैवोपरिष्टाद् वक्ष्यते। केवलोऽपि संमिश्रणे दृश्यते—अङ्गुष्ठनखांशुभिन्नया·········ऽच्छस्फटिकाक्षमालयेति ( माघे १।९॥ )। भिन्नेषु रत्नकिरणैः किरणेष्विवेन्दोः ( ४।४६॥ ) इति च। अभियातिरभिषेणने वर्तते, यातिरपि केवलस्तत्रैव—चैद्यः कृष्णस्य यातव्यपक्षे स्थितः। दशतिः सम्पूर्वः संयोजने वर्तत इतीहैवोपरिष्टाद्वक्ष्यते। केवलोऽपि तत्रार्थे दृश्यते —'दंशितो व्यूढकङ्कट' इत्यमरः। दंशितो बद्धकवच इत्यर्थः। तेन व्यक्तं धातुवाच्य एवार्थ उपसर्गसहकारेण द्योत्यत इति।

माघोऽप्याह—

सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे।
विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम्॥

इति ( शिशु० १०।१५ )

हन हिंसागत्योरित्यर्थद्वये पठितोऽपि हन्तिः केवलः प्रायेण गत्यर्थं नाचष्टे, यद्यप्येषोऽप्यर्थो धातुवाच्य एव, हंस[1] इत्यत्र विशदं तत्प्रतीतेस्तथाप्युपसर्गसहकारमन्तरेण न तमर्थमर्पयन्ति भूयसा। वधो घातो भवति, विवधस्तु पर्याहारः। विरत्र सन्तमेवानुद्भूतमर्थमुद्भावयति गतिम्। तथा चाह क्षीरस्वामी—विशिष्टो वधो गमनमत्रेति विवध इति।

उपसर्गा द्योतका इत्यत्र 'ऋते च तृतीयासमास' इति वृद्धिविधायकं शास्त्रमपि लिङ्गम्। तृतीयान्तेन सहानुपसृष्टस्य ऋतशब्दस्य गतापरपर्यायस्य समासानुपपत्त्या समृतः संगत इत्यर्थक ऋतशब्दो व्याख्येयो भवति। सुखेन ऋतः समृत इति सुखार्तः[2]। उपसर्गसहकारस्तु

१ हन्ति सम्यग्गच्छतीति हंस इति प्रक्रियासर्वस्व उणादिषु नारायणः।
२ सहार्थे तृतीया। सुप्सुपेति समासः। सुखं प्राप्त इति चार्थः।

नात्यन्तायापेक्ष्यत इति पूर्वमवोचाम। क्वचिच्चात्यन्तापेक्षितोऽप्युपसर्गो द्योतक एव न वाचक इत्यत्रापि सूत्रेषु ज्ञापकमस्ति। राधो हिंसायामित्येत्वाभ्यासलोपविधायकं शास्त्रम्। तत्र राधिर्हिंसार्थकोऽपि भवतीति व्यक्तमुदितम्। लोके पुनरपपूर्व एवायं प्रयुज्यते शत्रुमपराध्नोतीति। तत्रापेन हिंसार्थो द्योत्यत इत्येव सूत्रकारस्याशयः केवलस्य राधेर्हिंसार्थतां ब्रुवतः। अत्र भाष्यकारा इत्थं व्यवसितार्थमाहुः—एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह तिष्ठतिरेव व्रजिक्रियाया निवृत्तिमिति।

वस्तुत उपसर्गश्च धातुश्चेति द्वयमपि सम्भूय धातुरेव। धातुना क्रोडीकृत उपसर्गस्तदवयवभूत एवेति परमार्थः।

उक्तं च वाक्यपदीये—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्।
धातूपसर्गयोः शास्त्रे धातुरेव स तादृशः॥ इति।

अयमर्थः—लुङ्लङ्लृङ्क्ष्वडुदात्त इति योऽडागमविधिर्यश्चाडजादीनामिति, तौ यथास्थानं प्रकल्पेतामित्युपसर्गो धातोः पृथगित्युपेयते। इमावागमौ धातोरव्यवहितपूर्वं यथा स्यातां न तु सोपसर्गस्य धातोः पुरत इति व्यवस्थितये सेयं पृथक्त्वप्रक्लृप्तिरिति। अयमेव चोत्तरः पक्ष इत्यत्र मानान्तरमपि दृढतरमस्ति। अधि इङ् अध्ययन इति धातुपाठः। अत्रेङ् नाधिं व्यभिचरत्युपसर्गमिति सोपसर्गस्येङः पाठः, सोपसर्गस्यैव चार्थप्रत्यायकत्वमिति च। समानश्चायं धातुनोपसर्गस्याऽव्यभिचारः आङः शासु, [1]संग्राम-युद्ध-इत्यादिषु। धातूपसर्गसमुदायस्यैव च क्रियावाचित्वात्केवलस्य धातोश्चानर्थक्यात्समुदाय एव धातुरिति व्यवसीयते। क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वमिति तल्लक्षणात्।

किञ्च, येऽपि नाम धातवो निरुपसर्गाः पठितास्तेषां केचनोपसर्गनान्तरीयका एव प्रयोगमवतरन्ति। तदपि लिङ्गं धातूपसर्गयोः समुदायस्य धातुतायाम्। आरमत इत्येव प्रयुज्यते न कदाचिद्रमत इति। उड्डयत उड्डीयत इति वा प्रयुज्यते न तु डयते डीयत इति वेति। अवस्यतीत्येव प्रयुज्यते न जातुचित्स्यतीति। एवं मेङः प्रणिदानार्थकस्य सोपसर्गस्यैव प्रयोगो न



१ संग्रामयतेस्तु सोपसर्गाद्विधीयत आगम इति जितं धातूपसर्गयोर्धातुत्ववादेन।

निरुपसर्गस्य। निमयते विनिमयते वेत्येव प्रयोगो न तु मयत इति। तथा च चर-संशय इति चौरादिकोऽपि व्युपसृष्ट एव प्रयुज्यते न केवलः। तेन स्थितमिदं द्योतका उपसर्गा इत्यलं पल्लवितेन।

व्यवहारे त्वति हि वैचित्र्यं क्रियते धात्वर्थेपूपसर्गैरिति व्यक्तमुत्पश्यामः, तत्तदर्थप्रतिपत्तिरुपसर्गयोगकृतेति प्रतीमः। इदं चावेमः कश्चिदुपसर्गः प्रतीतमपि धात्वर्थं तिरयति विपर्यासयति वा। कश्चिन्निर्दिष्टमेवार्थमनुविधत्ते तदनुगुणं वार्थमाचष्टे। कश्चिच्च तत्रार्थे विशेषमुपजनयतीति।

तथा चोक्तमाचार्यैः—

धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा॥ इति।

तिष्ठतिर्गतिनिरोधे पठितः प्रपूर्वस्तु प्रयाणे चलने वर्तते—प्रतिष्ठते चैत्रः स्वगृहानिति। सम्पूर्वोऽयं परिसमाप्तौ मरणे च दृश्यते—सन्तिष्ठते यज्ञः। नियतमायुः प्राणिनामिति न कश्चिदकाले सन्तिष्ठत इति। सोऽयमर्थबाधः। प्रयाणस्य परिसमाप्तेर्मरणस्य च स्थितिविरोधात्। अयं चार्थबाधोऽन्यत्रापि बहुत्र लक्ष्यते। स दिङ्मात्रमुदाह्रियते। ईक्षतिर्दर्शने पठित उपपूर्वस्त्वदर्शने दर्शनपरिहारे वा वर्तते—वदल्पमपि नोपेक्ष्यं दुष्टं काव्ये कदाचनेति। भिदिर् विदारणे दो अवखण्डने दंश दशने दान खण्डन इत्येवं पठिता भिद्यतिदशतिदानयतयः समुपसृष्टाः संयोजने संगमने वर्तन्ते। सम्भेदो गङ्गायमुनयोः, हर्षोद्वेगसम्भेदः, सम्भिन्नसर्वाङ्गः कूर्मः (संहृतसर्वावयव इत्यर्थः), शृङ्खलासन्दितचरणः, सन्दंशः, सन्दष्टजिह्वः, सन्दष्टवस्त्रेष्ववलानितम्बेष्विति (रघौ १६।६५॥), शृङ्खलासन्दानिताङ्घ्रिः, सन्दानिनी (गोष्ठमित्यर्थः) इति क्रमेणोदाहरणानि। रमिः क्रीडायां पठितः, व्युपसृष्टस्तु क्रियामात्रनिवृत्तौ प्रयुज्यते—विरमति क्रीडाया इति। उपपूर्वोऽयं निधने वर्तते। निधनं हि सर्वचेष्टाभावपर्यायः। उपरतो महात्मेति तमशोच्यमपि शोचन्त्यर्थार्थिनो लोकाः। अस्यतिः क्षेपणे पठितः, निपूर्वस्तु निक्षेपणे निधाने वर्तते। संन्यधिकस्तु भूयोऽपि मूलार्थं प्रत्यापद्यते। संन्यस्यति त्यजतीत्यर्थः। त्यागश्च क्षेपणान्नातिभिन्नः। स्मरतिश्चिन्तायां पठितः प्रपूर्वस्तु विस्मरणे[1] वर्तते—



१ तथा च काव्यालङ्कारसूत्रवृत्तौ वामनः—

'क्रीडाभ्यासङ्गात्प्रस्मरति शास्त्रं बटु'रिति । तरतिः प्लवनतरणयोः पठितः प्रेणोपसृष्टो णिजधिकोऽयं वञ्चने वर्तते—न हि प्रतारकास्तारका भवन्ति लोकस्येति । इदमिह विमृश्यं कथमेतदर्थलब्धिरिति । अवश्यमत्रादौ निमज्जनमर्थमुपादायैव प्रहरणार्थमुपसङ्क्रान्तो धातुरित्युत्प्रेक्ष्यम्, अन्यथा वञ्चनार्थोपलब्धिर्दुरुपपादा स्यात् । यो हि वञ्च्यते स निमज्जयत्येव नोन्मज्जयतीति प्रशब्दकृतः प्रकृतेऽर्थविपर्यासः स्पष्टः । शंसतिः स्तुतौ पठितोऽभिपूर्वस्तु दोषारोपणे निन्दायां वर्तते--कष्टमसंभिन्नवृत्तोऽप्यसौ मत्सरिभिर्मिथ्याऽभिशस्यत इति । कदाचित्सोपसर्गस्यापि धातोरुपसर्गान्तरयोगो बाधतेऽर्थम्, प्रयोगशब्दो धात्वर्थगतं विशेषमाहोपयोगं चार्थम् । सम्प्रयोग इत्यत्र तु सम्शब्द उपयोगार्थमत्यन्तं तिरस्करोति, सम्पर्कं संश्लेषं मिथुनीभावं चाचष्टे । एवमाहारो भोजनम्भवति, व्याहारस्तु लपितम् । अयं चापरश्चित्रीयाकरोऽर्थबाधः—अवपालितावकर्णितावज्ञातावगणितेष्ववोऽर्थविपर्यये । तथा ह्यवपालितोऽपालितो भवत्यवकर्णितो नाकर्णित ईषदाकर्णित इति वा । एवमवज्ञातावगणितौ चानादृतौ भवतः । इहापि स्पष्टमवोऽर्थविपर्यासकृत् । यो नाम न ज्ञायते न संस्तूयते न गण्यते कोऽसौ कतमोऽसाविति स आत्मानमवहेलितम्मन्यते ।

अनुवृत्तिरप्युपसर्गैर्निर्दिष्टानां धात्वर्थानां क्रियते—अर्थयतिरुपयाच्ञायां पठ्यते, प्रपूर्वोऽपि तमेवार्थमभिधत्ते, सम्प्रपूर्वोऽपि—उपाध्यायमर्थयते प्रार्थयते सम्प्रार्थयते क्षितीश इति । द्विष अप्रीताविति धातुरपपूर्वकोऽपि तदर्थक एव—स मामपद्विष्टे, अहं च न जातु तं द्विषे । लभिः प्राप्तौ पठित आङ्पूर्वोऽपि कदाचित् तमेवार्थमाचष्टे—अतितरां कान्तिमालप्स्यते ते ( वपुः) इति मेघदूते । वदतिर्व्यक्तायां वाचि पठितः संवदतिरपि साहचर्यविशिष्टत्वे सति तत्र वर्तते—क्षणिकोऽपि गुरुजनसंवादः कल्याणाय भवति किमुत संवास इति । संवदन्तीवाक्षराणि, संवदति सीताया मुखचन्द्रेण शिशोर्लवस्य वदनकमलकमित्यादिषु तु संवदतिः सादृश्ये भाक्तः । आङ्पूर्वोऽपि गमिर्गत्यर्थमाचष्टे केवलोऽपि । आभिमुख्यं तत्राधिकमुच्यते । चलतिर्गत्यर्थकः प्रसिद्धः, उच्चलतिस्तूत्थानपूर्विकायां गताविति मूलार्थमेवानुसरति ।

विशेषं प्रकर्षमपि धात्वर्थं आदधात्युपसर्गः । ब्रूञ्व्यक्तायां वाचि व्यक्ताक्षरे भाषणे पठितः प्रोपसृष्टः प्रकर्षेण भाषणे व्याख्याने वर्तते—सूत्रं प्रब्रवीति, स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्, चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवत्यागमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति । सरतिर्गतौ प्रयुज्यते प्रसरतिस्तु व्यतिरिक्तायां गतौ प्रथने—प्रसरति किंवदन्तीति । एवं चरतिरपि

गतिसामान्ये पठितः प्रपूर्वः साधीयसि गमने वर्तते---तावद्रामायणकथा लोकेषु प्रचरिष्यतीति। साधयतिः सम्पादने वर्तते, प्रपूर्वस्तु साधीयःसम्पादनेऽलङ्करणे --प्रसाधयति शिरोरुहानिति। प्रसाधनी कङ्कतिका भवति।

जानातिर्ज्ञानसामान्ये वर्तते, विपूर्वस्तु विशिष्टे तस्मिन् --

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसे शुभात्॥
—इति।

गुणानां वा विशालानां सत्काराणां च नित्यशः।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः॥
—इति स्वप्ननाटके।

यथा यथा हि पुरुषः शास्त्रं समधिगच्छति।
तथा तथा विजानाति विज्ञानं चास्य रोचते॥
—इति मनौ।

किं च पदार्थानामेकत्वेनावबोधो ज्ञानमिति व्यपदिश्यते, नानात्वेन ज्ञानं तु विज्ञानं भवति। तस्मान्मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोरित्यमरोक्तिः सूपपन्ना भवति। जहातिस्त्यागे पठितो विनोपसर्गेण सहचरितस्तु साकल्येन तस्मिन्प्रयुज्यते। विजहाति यदा कामान्सर्वान्पार्थ हृदि स्थितानिति। भजतिर्देवपूजायां वर्ततेऽवपूर्वस्तु देवपूजाकरणके पापाद्यपाकरणे रूढः देवकृतस्यैनसोऽवयजनमसीति (ता० ब्रा०)।

तदिदं सर्वं प्रतिपत्तिसौकर्यायेत्थं समस्य विन्यस्यन्ति श्रीभट्टोजिदीक्षिता महावैयाकरणाः---

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहार-संहार-विहार-परिहारवत्॥ इति।

कस्क उपसर्गः केन केन धातुना युक्तः कं कमर्थमाहेति निदर्शनमेव अस्मत्कृत 'उपसर्गार्थ' चन्द्रिका-ग्रन्थे वर्तते इत्यवसाययामो गिरम्।



---




# वार्ताशास्त्रीयं राजनीतिः किञ्चित्

श्रीविभूतिभूषणभट्टाचार्यः

( सरस्वतीभवन काशी )

( पूर्वतोऽनुवृत्तः )

अस्मिन् निबन्धे लेखकेन वार्त्तां (*Economics*) शास्त्रीयकलाम्बिका-(*Banking*) माधिकृत्य ये खलु विषया आलोचितास्ते खलु संस्कृतवाङ्मयस्येदानीन्तन-जगत्यामपि सर्वजनव्यवहारयोग्यतां प्रमापयन्ति । अत्रापि तेन *Banking* विषयकपारिभाषिकशब्दा अपि शास्त्रतो गृहीता इति विशेषेण द्रष्टव्यम् । इदानीन्तनस्य *Bill of Exchange*. आदीनां प्राचीनं रूपं कदिश-मासीत् तदपि निबन्धेऽस्मिन् सरलया रीत्या प्रदर्शितम् । - सम्पादकः ।

वाणिज्य नाम यत् किञ्चिद् देशकालावधिकसमर्घपण्य[1]क्रयानन्तरं [2]लाभोद्देश्यकदेश-कालान्तराधिकरणकतत्पण्यविक्रयरूपं कर्मेति प्रागुक्तम् । इदानीं पुनर्वाणिज्योपकारकाणां केषाञ्चित्पदार्थानां विवेचनं प्रस्तूयते । तत्र वाणिज्यमूलभूतः क्रयस्तावत् धनसाध्य इति वाणिज्ये तस्यैव परमुपकारकत्वम् । वणिज आवश्यकधनाभावदशायां ऋणादानेन वाणिज्यनिर्वाहार्थं यतन्ते । तस्य [3]प्राणीत्यमिति संज्ञा दृश्यते । प्राणीत्यस्य च ऋणादानसापेक्षतया तस्य वाणिज्योपकारकत्वमर्थात् सिद्धम् । ऋणदानार्थमर्थप्रयोगस्य कलाम्बिरिति [4]कलाम्बिकेति कुसीदमिति वा संज्ञान्तराणि भवन्ति । स च कलाम्बिकापराख्यः अर्थप्रयोगोऽपि भाक्ते वाणिज्येऽन्तर्भूतः

कथमिति चेत्, लाभोद्देश्यकदानग्रहणात्मकक्रयविक्रयक्रियास्वरूपवाणिज्यलक्षणस्य तत्र सत्त्वात्। कलाम्बिकालक्षणं च [५]मूलाविनाशेन वृद्धिनिमित्तको धनप्रयोगः।

इदानीं ऋणदानग्रहणाङ्गभूतलेख्यस्वरूपं तावद् विचार्यते। धर्मशास्त्रीयव्यवहारप्रकरणेषु दृश्यते यद् धनिकेन ऋणदानकाले धारणिकाद् ऋणस्वीकारसूचकं लेख्यं ग्रहीतव्यम्। धारणिकेन च ऋणमोचनकाले धनिकतः अर्थस्वीकारसूचकं लेख्यं ग्रहीतव्यमिति। तादृशस्य च स्वीकार-सूचकस्य लेख्यस्य [६]हुण्डिकेति साधारणसंज्ञा विद्यते। तत्र धारणिकेन ऋणग्रहणकाले धनिकाय या हुण्डिका दीयते तस्या देयं मया [७]चीरिकेति ( प्रामिसरी नोट ) विशेषसंज्ञाऽस्ति। धनिकेन च ऋणशुद्धिकाले तल्लेख्यं धारणिकाय [८]प्रत्यर्पणीयम्। यदि दैववशात् तद्दातुं न शक्यते तदा धारणिकाय [९]प्रतिश्रवपत्रं ( एकनालेज्मेन्ट रीसीट ) देयम्। प्रतिश्रवपत्रञ्च गृहीतं मयेति स्वीकारसूचकं भवति। धारणिकात् ऋणशुद्ध्यन्तराले वृद्धिं गृहीत्वा [१०]उपगतं ( रीसीट = रसीद ) नाम लेख्यं दातव्यम्। तदपि प्राप्तिसूचकं लेख्यमिति विभावनीयम। एतेषां खलु लेख्यानां [११]रचनारीतिस्तु तत्तद्ग्रन्थेषु सविस्तरमुपदर्शितं नेह प्रदर्श्यते। इदानीं धनिका येन खलु प्रकारान्तरेण वणिज उपकुर्वन्ति तदालोच्यते। अनुभूतमेव सहृदयैः यत् पथि प्रवासे वा व्ययार्थं धनमादाय गमने स्तेयसाहसादिकृता धनहानिसम्भावना प्रबलैव स्यादिति। अतः वणिजः तत्सम्भावनापरिहारार्थं विदेशगमनकाले आवश्यकं तावत् धनं धनिकस्थाने निक्षिप्य उद्दिष्टेषु विदेशीयेषु हट्टेषु पण्यक्रयार्थं गच्छन्ति। धनिकाश्च स्वकर्मकरप्रतिनिधिभ्यस्तद्धनस्वी-कारसूचकं निर्दिष्टेषु हट्टेषु वणिग्भ्यः तन्निरूपितक्रयाधिकृतेभ्यो वा यथानिर्दिष्टधनदापनौप-यिकं च लेख्यं हुण्डिकासंज्ञकं वणिग्भ्यः अर्पयन्ति। यत् प्रदर्श्य वणिजस्तन्नियुक्ता वा कर्मकराः तत्तद्धट्टेषु लेख्यनिर्दिष्टं धनं धनिकप्रतिनिधिभ्यो लभन्ते। निक्षेपविशेषश्चायं भवति। निक्षेपस्य यथास्थानं दापनार्थं धनिकैः वृद्धिरपि लभ्यते। धनिका एतदर्थं [१२]दीनारहुण्डिकां वणिग्भ्यः प्रयच्छन्ति यत्र च देयधनादिपरिमाणं उट्टङ्कितं भवेत।

वृद्धिरपि धनिकधारणिकभेदेन बहुधा स्यात्। तद्यथा—धर्म्या, व्यावहारिकी, कान्तारिकी, सामुद्री च। तत्र धर्म्या नाम—धर्मशास्त्रानुमोदिता, धारणिकानां अपीड़ाकरा पणशते मासिकी सपादपणपरिमिता, धर्मजनिका अपीडाकरत्वात्, कौटिल्येन निर्दिष्टा[१३]। व्यावहारिकी नाम—व्यवहारेषु भवा, तदर्थश्च याचितेऽपि मूल्ये कालान्तरिततद्दानादौ सामान्ये वा वाणिज्ये मूलधन-प्रयोगार्थं ऋणग्रहणस्थले च यत्परिमिता वृद्धिः लोकैः स्वीक्रियते, सा च पणशते मासिकी पञ्च-

पणपरिमिता[14]। लोकव्यवहारसिद्धेयं धर्मशास्त्रानुमोदिता अतएव व्यावहारिकीति कथ्यते। कान्तारकाणां पणशते मासिकी वृद्धिः दशपणपरिमिता[15]। सामुद्राणाञ्च विंशतिपणमिता[16]। तथा च ये खलु धारणिका वृद्धया धनं गृहीत्वा अधिकलाभार्थं कान्तारादिकं प्रविशन्ति ये वा समुद्रादिपारं गच्छन्ति, तैः सह प्रयोगे मूलधनविनाशशङ्का बलीयसी भवति. इत्यतः तादृशस्थले वृद्धेर्मानं अधिकतरं भवत्येव। यतो धनिकाः खलु मूलाविनाशेनैव लाभार्थं कलाम्बिकायां प्रवर्तन्त इति प्रागेवोक्तम्। एतावता धनिकाद् वृद्धया धनमादाय वाणिज्यनिर्वाहोपायः, प्रसङ्गाच्च एकत्र देशे धनिकेषु धनादिकं निक्षिप्य देशान्तरे धनिकप्रतिनिधिभ्यस्तद्धनमादाय वाणिज्यनिर्वाहोपायश्च आलोचितः।

इदानीं पुनः प्रकारान्तरेणापि वाणिज्यनिर्वाहोपायः समुपस्थाप्यते—

सोऽयमुपायः शास्त्रेषु सम्भूयसमुत्थाननाम्ना प्रसिद्धोऽस्ति। तं खलूपायं वाणिज्यार्थं प्रयोज्यस्य धनस्य अपर्याप्ततादशायां ऋणविमुखाः कारणान्तराद्वा वाणिज्यकर्मणि अधिकधनप्रयोगविमुखाः अन्ये वा वणिज आश्रयन्ते। तथा च यादृशस्थले वणिजः सम्भूय आत्मनो ऋद्ध्यर्थं वाणिज्यं कुर्वन्ति तत् सम्भूयसमुत्थानमिति कथ्यते। तादृशे च समुत्थाने सम्भूयवणिजां मूलधनसमाहारकाले येन योंऽशः प्रक्षिप्तः तस्यैव आधारभूतस्य प्रक्षेपस्य ( शेयर ) अनुपातेनैव लाभक्षयव्ययोदयविभागो[18] भवति। अत्र च[19] प्रक्षेपवृद्धिविषयकः कौटिल्योक्ततात्पर्यमनुसन्धेयम्। सम्भूयसमुत्थानस्थले च वाणिज्याङ्गभूतं सर्वं कर्मजातं प्रक्षेपकैः वणिग्भिः समयानुसारं मतिसाम्यसम्पादनपुरःसरमनुष्ठेयम्[20]।

नन्विदमिदानीं विचारणीयं यत् मूल्येन पण्यस्य विनिमयात्मके वाणिज्ये पण्यानां तन्मूल्यभूतद्रव्याणाञ्च मिथः परिमाणनियमः व्यवहारसाम्यसम्पादनाय आवश्यकः। असति तादृशे नियमे क्रेतृविक्रेतॄणां कृते पण्यमूल्यनिर्द्धारणं अशक्यमेव स्यादिति तु अनुभवसिद्धम्। यतः कस्यचिदेकस्य पण्यस्य कतमेन कियता च मूल्यभूतेन द्रव्येण क्रयो विक्रयो वा भवतु इति विवाद एव भवेत्, क्रेतृविक्रेतॄणां मूल्यभूतस्य द्रव्यस्येष्टतातारतम्यात्। यथा कथञ्चिदेकस्य द्रव्यस्य तेन पण्येन विनिमययोग्यसंख्यादिनिर्देशे तु तद्द्रव्यशून्यानां क्रेतॄणां तत्पण्यक्रये महान् क्लेशः सम्भवेत्। वस्तुतः तादृशस्थले तु क्रेतॄणां कृते अभीष्टानां पण्यानां क्रयार्थं हट्टादौ गमनकाले

 तत्तत्पण्यक्रयसाधनद्रव्याणां तिलयवमुद्गमाषमगोऽजघटपटादीनां समुदयेन सज्जीभूय एव गन्तव्यमन्यथा अभीष्टपण्यप्राप्तिरेव न स्यात्। तथा च तत्तत्पण्यानां क्रयसाधनत्वेन यदि

तत्तद्द्रव्यविशेषाणां एव रूपमानादिनियमः क्रियते तदा क्रयविक्रये व्यवहारेषु क्रीतस्य पण्यस्य मूल्यदाने केतॄणां महत्कष्टं पण्यविशेषस्य च क्रयसाधनत्वेन यदि तावतां द्रव्याणां रूपमानादिकं निर्णेयं स्यात्तदानीं महान् आयासः राजपुरुषाणां स्यात्तथा क्रेतॄणां पण्यक्रयस्य दुष्करत्वमपि प्रदर्शितपूर्वमिति विभाव्यैव वार्ताशास्त्रकृत्भिराचार्यैः सामान्यतः क्रयसाधनत्वेन[21] सम्यग्व्यवहारार्थं मानवस्तुत्वेन च द्रव्यविशेषाणां कल्पना कृता। तच्च द्रव्यं स्वर्णरौप्यताम्राय-सादिनिर्म्मितं[22] क्रेतृविक्रेतॄणां मूल्यप्रत्ययकारि च भवति इत्यतः मुद्रेति[23] मुद्रिकेति वा कथ्यते। तानि च पणनिष्कदीनारद्रम्मटङ्कादिसंज्ञकानि प्रसिद्धानि। धर्मशास्त्रेष्वपि[24] मुद्राणां सम्यग्व्यवहारार्थं मानवस्तुत्वेन कथनं अस्मदुक्तं द्रढयति—इति अद्यात्रैव विरम्यते।

(१) लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा क्रयविक्रयधर्मेषु सर्वं तत्पण्यमुच्यते।
( नारदीयमनुसंहिता विक्रीयासम्प्रदानप्रकरण २ श्लोक )

(२) लाभार्थो वणिजां सर्वः पण्येषु क्रयविक्रयः। स लाभोऽर्घमासाद्य महान् भवति वा न वा। ( तत्रैव प्रकरणे ११ श्लोकः )।

(३) "प्राणीत्यमृणमर्थानां" शब्दकल्पद्रुमधृतत्रिकाण्डशेषे।

(४) "अर्थानां प्रयोगः स्यात् कलाम्बिका" ( तत्रैव )।

(५) स्थानलाभनिमित्तं हि दानग्रहणमिष्यते। तत् कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ( ना० मनु० ऋणादान प्रक० ८६ श्लोक )।

(६) हुडि–वरणे इत्यस्मात् धातोर्निष्पन्नं पदं स्वीकारसूचकं भवतीति बोध्यम्।

(७) द्रष्टव्यः लोकप्रकाशः। ( कश्मीर सीरिज़ ७५ संख्या ) क्षेमेन्द्रकृत पृ० १४–१६।

(८,९) लेख्यं दद्याद्दणे शुद्धे तदभावे प्रतिश्रवम्। (ना० मनु० ऋणदान प्रक० ९९ श्लोक)

(१०) गृहीत्वोपगतं दद्याद् ऋणिकायोदयं धनी। ( तत्रैव ९८ श्लोक )।

(११) लेखपद्धति-लोकप्रकाश इत्यादौ अनुसन्धेयाः।

(१२) लेखपद्धतिग्रन्थे दीनारहुण्डिकास्वरूपं १०, ११ पृ० द्रष्टव्यम्। लोकप्रकाशे च।

(१३-१६) सपादपणा धर्म्या मासवृद्धिः पणशतस्य। पञ्चपणा व्यावहारिकी। दशपणाः कान्तारकाणाम्। विंशतिपणाः सामुद्राणाम्। कौ० अर्थशास्त्र ३।११। ऋणदानप्रकरणं द्रष्टव्यम्।

एवं वीरमित्रोदयधृतधर्मशास्त्रकारवचनान्यपि द्रष्टव्यानि। ( पृ० २९६-९७,३०२,-३ ) कलिकाता-जीवानन्दसंस्करणम्।

(१७) वाणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते तत्सम्भूयसमुत्थानं.............( ना० मनु० सम्भूयसमुत्थानप्रकरणं १ श्लोक )

(१८) फलहेतोरुपायेन कर्मसम्भूयकुर्वताम् । आधारभूतः प्रक्षेपस्तेनोत्तिष्ठेयुरंशतः ॥ समोऽतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः । क्षयव्ययौ तथावृद्धिस्तस्य तत्र तथा विधा ॥

( तत्रैव २३ श्लोक ) ।

(१९) प्रक्षेपवृद्धिरुदयादर्धं संनिधानसन्ना वार्षिकी देया ॥ (कौ०अर्थ०ऋणादान ३।११)

(२०) भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम् । कुर्युस्ते व्यवहारेण समये स्वे व्यवस्थिता ॥ ( ना० मनु० सम्भूय० ४ श्लोक । )

"प्रत्यहं वारक्रमेण परस्परतः सम्पाद्यं मतिसाम्यम्" इति तद्भाष्ये भवस्वामी ।

एवं बहूनां सम्मतो यस्तु दद्यादेको धनं नरः । करणं कारयेद्वापि सर्वेणैव कृतम्भवेत् । वीरमित्रोदये बृहस्पतिवचनम् ( पृ० ३८५ जीवानन्द सं० )

(२१) सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभनाम् । सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥ ( वीरमित्रोदये दिव्यप्रकरणे तप्तमाषविधिः बृहस्पतिवचनं पृ० २८४ कलिकाता जीवानन्दसंस्करणम् । मिताक्षराव्यवहाराध्याये च द्रष्टव्यम् ) ।

(२२ २३) शब्दकल्पद्रुमकोषे मुद्रा, मुद्रिका, दीनार, निष्क, पण, कार्षापण, अवक्रय, शब्दार्था द्रष्टव्याः ।

(२४) एतासां मुद्रिकाणां देशभेदेन व्यवहारविषये नारदीयमनुसंहिताप्रकीर्णकप्रकरणे ११६-११८ श्लोका द्रष्टव्याः ।

---




# भारतीय-संस्कृतिः

जगन्नाथ उपाध्यायः

( सरस्वतीभवनम्, काशी )

लेखकोऽस्मिन्निबन्धे भारतीयसंस्कृतेर्मूलभूतमखण्डरूपमाकलय्य तस्य वर्तमानानुकूलं प्रयोगरूपमपि प्रादर्शयत्। निबन्धकेनास्मिन् लेखे एका विचारधारा उपस्थापिता। सा सम्मता असम्मता वा स्याद् अत्यर्थं विचारणीयेति न शङ्कावकाशः। यदि अन्येऽपि निष्पक्षविचारकाः सनातनतत्त्वमनुरुध्य तस्य वर्त्तमानानुरोधिनं नवीनं समाधानप्रकारं प्रस्तोष्यन्ति तदाऽस्मिन् स्तम्भे सादरं प्रकाशयिष्यते-सम्पादकः।

भारतवर्षे संस्कृतिर्नवीनं भावनातत्त्वम्। यूरोपीयाणां शताब्दीव्यापिना कलहेन रक्तपातेन च यदा धर्म आकर्षणहीनस्त्याज्यश्चाभूत् तदा तत्र संस्कृतिनाम्ना एकं नवीनं जनतासंग्राहकं तत्त्वमुदितमभूत्। यस्योदात्तप्रेरणा प्राचीनधार्मिकप्रेरणापेक्षया अधिकं मनोग्रीहणी अभूत्। अतस्तदेव समस्तयूरोपीयप्रगतेः केन्द्रम्, कवीनां मनीषिणाञ्च भावभूमिरभवत्। प्राचीने तु भारते इदन्तत्त्वं धर्मस्य सार्वभौमरूपे यद्यपि दृश्यते, परन्तु कालक्रमेण तत् सम्प्रदाय-जाति-वंशादिजन्याभिमानदम्भाभ्यां अस्तमिव अनन्तपाषण्डग्राहैः ग्रस्तमिव वा जातम्। यदा च भारतीयेषु नवीना जागर्तिरुत्पन्ना तदा विचारकाणां भावभूमौ इदमेव संस्कृतिनामकं संग्राहकतत्त्वं पाश्चात्यभावैः सुप्रभावितं अत्रागतम्। अत एवास्या भारतीयस्वरूपनिर्वचने बहवो विवादा वर्धन्ते। परञ्च सर्व एव प्रतिपत्तारः अखण्डामेकां तां भारतीयसंस्कृतिं मन्यन्ते, तां विकासयितुं यतन्ते च। अत एतस्मिन् विषये अद्यावधि न सर्वसम्मतः सिद्धान्तो जातः। अतोऽभिनवनिर्माणार्थम् अपर्याप्तासु प्राचीनपरम्परासु यत्किञ्चित् संशोधनं परिवर्तनं च उपस्थाप्यते न

तत्तथा अनुकूलं भवति येन संस्कृतेः अखण्डं स्वरूपं परिस्फुटं भवेत्। भारतीयाः स्वशासनस्य शकटं जनतन्त्रवर्त्मन्येव नेतुं निश्चितवन्तः। जनतन्त्रं विशिष्टा शासनप्रणाल्यस्ति, ताञ्च विभिन्नस्थित्यनुरूपां सजीवां सुसेवाञ्च कर्तुं संस्कृतरूपः सुदृढ आधारोऽपेक्ष्यते धर्मप्रेरणया कलहायमानायाः प्राच्यपाश्चात्यपरम्पराया इतिवृत्तमवलोक्य शासनप्रवर्तने धर्मस्य अनुपयोगित्वं सुस्पष्टमवधार्य केचित् भारतीयजनतन्त्रं विशुद्धभौतिकाधारे प्रतितिष्ठापयिषन्ति, अन्ये तस्मिन् सम्प्रदायानुरोधितत्त्वं निधातुमिच्छन्ति। प्रथमपक्षे जात्याद्यवलम्ब्य अनन्तवैषम्यवन्तं समाजं समाजवादानुरूपं सुस्वस्थं विधातुमवकाशो विद्यते। अपरस्मिन् पक्षे स्वातीतगौरवमेव भृशं विश्वस्य हिन्दुत्वं पुनर्विशालं सुदृढञ्च विधातुं प्रयत्नो विद्यते। परमेतौ द्वावेव पक्षौ विमर्शसापेक्षौ। प्रथमपक्षे आत्मानुसंधानस्याभावं स्वातीतञ्चाविश्वस्य नवनिर्मितेस्त्वरा विद्यते। द्वितीये पक्षे पुरातनं प्रति मोहः, परकीयसंस्कृतिं प्रति घृणा तिरस्कारश्च वर्धेते। एतद्विपरीतो भारतीयस्वभावं जिज्ञासया आत्मानुसंधानेन सकलसामञ्जस्येन च जीवनरहस्यमवद्धाति, अथ च तस्य पर्यवसानं समर्पणे, समतायां, सहयोगे च भवति। योऽपि समाजः अध्यात्मदर्शनमेव जीवनरहस्यं स्वीकरोति तस्य कृते सुतरामविद्यामूलकः कुलजन्मादिमोहः, असद्विद्यामूलकश्च वादतर्कादिदम्भः, धर्माचारादिसंकीर्णतादुराग्रहश्च हेया भवन्ति। भारतीया संस्कृतिः सामञ्जस्यभावनया प्रोता विद्यते, अतस्तस्या वर्गसंघर्ष-वर्गवादाभ्यां संगतिर्नास्ति। अतो भारतीयजनतन्त्रेणापि भारतीयतत्त्वज्ञानानुरूपो मध्यममार्ग एव समवलम्बनीयः। कस्यापि पक्षस्य वस्तुनो वा इदन्तया इत्थन्तया च सदेव शोभनमेव असदेव अशोभनमेव वेति निर्वर्णनम् अखिलसिद्धान्तसंमता भ्रान्तिरस्ति। अतोऽस्यां मध्यमपद्यायां भारतीयसंस्कृतेः स्वरूपं सुप्रतिष्ठितमासीत्, तथाऽद्यापि तेनैव मार्गेण गच्छन्तो वयं जनतन्त्रस्य सुसङ्घटितं सुदृढञ्च आधारं प्राप्स्यामः।

विभक्तेषु अविभक्तदृष्टिसम्पादनं संस्कृतेर्लक्ष्यम्; सामञ्जस्येन मिथः संशोधनेन च सम्पाद्यमानलोकमङ्गलन्तस्या जीवनम्, काव्यकलाविज्ञानोपासनादयस्तस्याः साधनानि; समानुभूतिसहानुभूती तस्याः व्यावहारिकं रूपमस्ति।

(क) धर्मभावनया विज्ञानद्वारा च सनातनस्य सत्यस्य सततमन्वेषणम्।

(ख) एकस्यैव कर्मणोऽनन्तानन्तश्रृंखला।

 (ग) तस्यामेव कर्मश्रृंखलायां चराचरात्मकस्य विश्वस्य एकत्वेन सङ्ग्रथनम्।

(घ) तेन निखिलमानवकर्मफलानां परस्परमादानप्रदाने।

( ङ ) तन्निर्वाहाय कुलवर्णकुटुम्बादीनां वैज्ञानिकी व्यवस्था, परस्परं सम्बन्धकल्पना,

( च ) एतस्या रक्षणम्,

( छ ) इमाञ्च व्यवस्थामाश्रित्य निष्कामकर्मयोगस्य अपूर्वानुशासनेन भोगविरोधिभिः शमदमदानव्रततपोभिर्जीवनसाधनम्,

( ज ) व्यक्तित्वस्य परमः सम्मानः,

( झ ) समाजेऽधिदैवतदृष्टिः—इत्याद्यवलम्ब्यैव भारतीया संस्कृतिः सुविहिताऽभूत् ।

कोऽपि भावः स्वस्मिन् कूटस्थवदचलः पूर्णश्च नास्ति । अतएव संस्कृतिः समाजस्याविच्छिन्नानां पवित्रतमानां प्रवृत्तीनां सततं प्रवहद्धारामात्रम्, या नैवात्यन्तमपूर्वमूला नापि च सर्वथाऽनादिमूला भवति । अतः संस्कृतिस्वरूपाकलनप्रसंगे प्राचीननवीनकोटी उद्भाव्य श्रृङ्गग्राहिकया विभागेन तस्याः संकेतः, तच्चाश्रित्य विभिन्नं व्याख्यानं तदनुसृत्य च समाजस्य व्यवस्थाविधानं एतत्सर्वमेव संस्कृतिस्वभावविपरीतम् ।

भारतीयसंस्कृतौ व्यष्टिसमष्टी पूर्णस्य मानवस्य अविनाभूते द्वे रूपे स्तः । अतो व्यक्तौ विराट्सत्ताया अन्तर्भूतिः, विराट्सत्तायाञ्च व्यक्तित्वस्य स्वरूपसमर्पणमिति द्वे अपि तत्त्वे भारतीयसमाजपरिष्कारायापेक्ष्येते । इदमत्रावधेयम्—समाजे व्यक्तित्वस्यान्तर्भावेण अथवा समर्पणमात्रेण तस्याविकलं निर्माणं न भवति । यतोऽस्मादेकाङ्गिनिर्माणात् व्यक्तिः कामं अतिमानवीं दिव्यां वा अवस्थां प्राप्नुयात्, किन्तु एतेन सर्वसाधारणमानवजीवनधरातलन्तु त्यक्तमेव स्यात् । प्रागुक्तधरातल ( भूमिका ) परित्यागो नाम—तस्याभावः, अन्यथाभावो वा । यद्येवम्, तर्हि स्वाभावेन स्वस्यान्यथाभावेन वा मानवसमाजस्य को लाभः ? अतः पूर्वसङ्केतितावस्थैव सर्वसाधारणस्य धरातलोपरि नेतुमपेक्षिताऽस्ति । इदन्तदैव सम्भवि, यदि व्यष्टावेव समष्टेः साक्षात्कारः स्यात् । स्वात्मसमर्पणस्य अन्तर्भूतेर्वा अभिप्रायो नाश इति तु न मन्तव्यम् । समाजे व्यक्तेर्लोपो नाशो वेति कोऽपि पाश्चात्त्यो भावः, यो हि समष्ट्यधिदेवस्य सत्तामस्वीकुर्वन्नपि आरोपितसमाजात्मनि व्यक्तित्वलयमवैज्ञानिकं यथा स्यात्तथोपदिशति । भारतीयसंस्कृतौ तु व्यक्तिः सृष्टिचक्रस्य ( विराजः ) केन्द्रमस्ति, तस्याः पूर्णता तु समष्टिरेवास्ति । तदेवम् एकमेव तत्त्वं व्यक्त्यनुरोधेन संस्कारः, समष्ट्यनुरोधेन संस्कृतिरित्युच्यते । समतास्वातन्त्र्ययोरनुभूतिः मानवतायाः परा काष्ठाऽस्ति । अनयोरनुभूतये व्यक्तिसत्ताया अनिवार्यतया अपेक्षा अस्ति । अद्य पाश्चात्त्येषु व्यक्तिस्वातन्त्र्यं नाभिमतमस्ति । अत एव ते भोगप्रधानसभ्यतावादिनो जाताः, वयञ्च त्यागमूलकसंस्कृतिवादिनः ।

इत्थं भारतीया संस्कृतिः स्वीयतत्त्वज्ञानानुरूपा अखण्डा संस्कृतिरस्ति। बह्वीभिर्जातिभिः विभिन्नैः धार्मिकसिद्धान्तः अगणितैः सम्प्रदायैश्च सम्भूय अस्याः संस्कृतेर्निर्माणं कृतमस्ति। एकस्यैवाभिन्नतत्त्वस्य प्रस्थानभेदेन भूमिकाभेदेन च प्रवर्तितपरस्परविरोधिविभिन्नसिद्धान्ताः, उपासनाभेदमङ्गीकृत्य एकस्मिन्ननेकसमन्वयः, एकस्मिन्नेव तत्त्वे त्रिंशत्कोटिदेवानां दर्शनम्, एकस्मिन्नेव कुटुम्बे वैष्णवशाक्तशैवपाशुपतादीनां परस्परविरोधिजीवनप्रणाल्यः, निराकारसाकारकल्पना, एकदेवोपासना बहुदेवोपासना, ईश्वरानीश्वरवादः, आगमनिगमयोः प्रामाण्यम्, आत्मानात्मवादः, वेदानां पौरुषेयत्वापौरुषेयत्वे, वेदानां स्मृतीनां पुराणानां च विभिन्नसम्मतिषु आदर इत्यादयः भारतीयकुटुम्बस्य प्रेमाणं एकतां वा छेत्तुं न प्रभवन्ति। अवतारेषु—रामकृष्णबुद्धकूर्मवराहनृसिंहानाम्, देवेषु—ब्रह्मविष्णुरुद्रभैरवादीनाम्, देवीषु—सरस्वतीलक्ष्मीपार्वतीकालीशीतलादीनां पूज्यतासु कस्यापि भारतीयस्य संदेहो नास्ति। उपासना आध्यात्मिकं विज्ञानमस्ति, तदाधारीकृत्य आचारविचाराणां पार्थक्यं व्यक्तिजीवनस्याङ्गमस्ति, एवं स्थितौ समाजे कुटुम्बे वा अव्यवस्था कथं स्यात्? अस्मिन्नेव भारतीयजीवने तस्या अखण्डसंस्कृतेर्मूलबीजमस्ति, यस्याः निर्माणस्याधारो जातिसम्प्रदायवर्गादीन् अपहाय समता सामञ्जस्यं स्वतन्त्रता च भविष्यन्ति। एतदेवादाय प्राचीने भारते विवेकसंयमशान्त्यादिपूर्णसमाजस्य निर्माणार्थं वर्णव्यवस्थायाः प्रयोगोऽधिकारनिरपेक्षकर्मयोगरूपेणाभूत्। परन्तु कालक्रमेण सैव वर्णव्यवस्था उच्चावचभावस्य परिचायिका अभवत्। तया बहूनां जनानां प्रतिभा आकांक्षाश्च निर्दयं विदार्य मानवजीवनस्य महल्लाघवमापादितम्। अस्मिन् मानवीयशीलेऽस्तमिते परैस्सम्मेलनस्य निदानमस्माकं चिरसंचितस्नेहो नवनिर्माणस्य चिरन्तनं शक्तिस्रोतश्च शुष्कमभवत्। किं बहुना, उच्चताया अनेन विकरालदम्भेन स्वपूर्वजैः परश्शतैर्वर्षैं निर्मितसमाजादुत्कृत्य परस्सहस्रा आर्यसन्ततयः परकीयाः सम्पादिताः। अस्यां विंशशताब्द्यां एतस्य महापापस्य तथा हृदयविदारकमवसानमभूत् यस्य श्मशानचित्रेण आर्याणां शुभ्रेणेतिहासेन कृष्णायितम्। अद्याप्यस्मिन् पापानलकुण्डे इयमार्यभूमिः परिदग्धेवास्ते। तदुद्धाराय सद्भिर्विद्वद्भिर्नूतननिर्माणाय पवित्रा संस्कृतिरुद्भावनीया। यस्याः पवित्रशिलायां सर्वे वियुक्ताः संयुक्ताः कर्मिणोऽकर्मिणश्चार्यवंश्या राष्ट्रस्य पुनर्नवं निर्माणं कुर्युः। तच्च निर्माणं जन्मगतमधिकारमपेक्ष्य न भवेत्। साम्प्रदायिकतत्त्वे शासनतन्त्रस्य प्रभावोऽपि वर्ज्यः। समत्वस्वातन्त्र्ययो रक्षार्थं धर्मेण सामाजिक-
४८ रूपेण राजनियन्त्रितेनैव भाव्यम्। सामाजिकव्यवस्थाया आधारशिला च एका भारतीया संस्कृतिरस्तु। अन्यथा जातिसम्प्रदायावाधारीकृत्य स्थिता संस्कृतिर्विभिन्नां राष्ट्रियतां जन-

यिष्यति। सा च राष्ट्रियता संस्कृतेरुपरि प्रभुत्वमापद्य स्वदेशस्य मानचित्रं भावचित्रञ्च शतधा विच्छिद्य तां कलहाग्नौ निपातयिष्यति। अपि च उपनिषदां गीतायाश्च विश्वबन्धुत्वसंदेशेन बुद्धगान्धिनोर्धर्मचक्रप्रवर्तनद्वारा च सम्भावितगौरवविस्तारोऽपि चिराय धूलिसाद् भविष्यति।

विपत्तिव्रातैर्निष्पीडिता हरिजना अद्याप्यर्धचेतनायां निपतिताः सन्ति। निकटतमे भविष्ये तेषां नेत्रोन्मेषोऽवश्यम्भावी। हरिजनसम्पर्कवद्भिरनुमीयते यदागामिनि दशके प्रतिशोधनस्य एका अपूर्वा भीषणज्वाला प्रस्फुटिष्यति। प्रमाणमत्र अधीयानानां हरिजनयूनां हृदयम्। आश्चर्यन्तु तदा भवति यदा ते सामाजिकानाचारेण भृशमुत्तप्ता महात्मगान्धिनो हरिजनकार्यक्रममपि स्वजीवनस्य परिहासव्यञ्जकमामनन्ति।

स्वदेशरक्षायै, स्वपूर्वगौरवप्राप्तये, तत्प्रसाराय च येषु देशेषु अस्माकं पूर्वजानां धार्मिकं सांस्कृतिकञ्च ऋणमस्ति, तेषां संग्रहाय अस्माभिः स्वदेशे एक उदारः पवित्रतमश्च जीवनक्रमो निर्मातव्य एव। अस्माकं प्रतिवेशिभिर्लंकाबर्माश्यामचीनमङ्गोलियाजावासुमात्राबालीबोर्नियोप्रभृतिभिरैक्यं विधातुं द्विसहस्राब्दीतः पूर्वं सृष्टेः पवित्रतमम् अनुप्रवेशि एकं सूत्रं भगवता बोधिसत्त्वेन निर्मितमासीत्। यद्यद्य भारतं तदेव सूत्रं पुनः संयोजयेत्तर्हि अचिरादेव अशीतिकोटिमानवाः एकस्यां पूततमायां सांस्कृतिकधारायां प्रवाहिताः स्युः। किन्तु एतदर्थं त्रिंशत्कोटिभारतीयानां सांस्कृतिकमैक्यमत्यन्तमपेक्षितम्। अस्य समारम्भे प्रबला बाधा जातिभेदोऽस्ति, यस्य निम्नाङ्कितं मन्तव्यमस्ति—यस्या जातेर्योहि बहिर्गतः स स्वीयं पूर्वस्थानं पुनः प्राप्तुं न प्रभविष्यति। भिन्नां जीवनप्रणालीं भिन्नामुपासनापद्धतिञ्चाददानस्य जीवनं कलङ्कितं भवति, तस्यागमनमात्रेणैव समाजस्य पवित्रता नश्यति। एभिर्दम्भपूर्णैर्मन्तव्यैर्यदि समाजो रक्षितव्यस्तदा जातेर्वर्तमानैषा व्यवस्था घोरमुपेक्ष्यैव।

वर्णव्यवस्था मानवानाम् अप्रतिमा वैज्ञानिकी व्यवस्था। तस्या आधारः कर्तव्यस्य नैरन्तर्यं भोगाच्च विरतिरेव। ते चाद्यत्वे सम्पूर्णतो नष्टे। एतदर्थं दम्भ-पाषण्डहीनं सुसंस्कृतमेकं मानवीयजीवनधरातलमपेक्ष्यते। यत्र समाजस्य स्वाभाविके गुणकर्मणी पुनर्विकासमापद्येताम्। भारतीयानामद्ययावद्विकासे जातिवादस्यापि महत्त्वपूर्णं स्थानमासीदित्यत्र न शंकावकाशः। एतस्मिन् जातिवादे काश्चिद् जीवनस्य शोभनाः प्रणाल्योऽपि विकासिता आसन्निति स्पष्टम्। अतः प्राचीनाया जीवनप्रणाल्याः समूलमुन्मूलनं विधाय नवीनायाः कस्याश्चिदपरिचितायास्तस्याः स्थापना अनुचिता स्यादिति फलति। प्राचीनतायाम् अयं विद्वेषः समाजशास्त्रस्य संस्कृतेश्च स्वभावतः प्रतिकूलोऽस्ति। समाजस्य प्रत्येकव्याप्यजीवनपरम्परायाः कृते स्वभावा-

नुसारं विकासस्य स्वातन्त्र्यमपेक्ष्यते। जीवनपरम्परा नाम—अशनपानयोः, प्रेमसम्बन्धयोः, वेषभूषयोः, उत्सवमनोरञ्जनयोः, सुखदुःखयोः प्रकाशस्य, कुटुम्बव्यवस्थायाश्च परम्परागता विशेषप्रणाली। तस्या उत्तमांशेन कश्चित्समाजः सभ्यो भवति अशोभनांशपरिष्कारेण सुसंस्कृतो भवति, एतेन एकस्यामेव संस्कृतौ हिन्दुमुस्लीमजैनबौद्धईसाईपारसीकाः अन्तर्भूय पारस्परिकादानप्रदानाभ्यां विविधजीवनप्रणाली विंकासयिष्यन्ति।

एकेश्वरवादः, मूर्तिपूजाया विरोधः, कुरानशरीफ़ इत्यस्य प्रामाण्यम्, वीरपूजनम्, दानशीलता, स्त्रीणां सतीत्वरक्षणम्, अपूर्वं भ्रातृत्वमित्यादयः इस्लामस्य वैशिष्ट्यमस्ति, यत् एकस्यां विशेषजीवनप्रणाल्यां विकसितमस्ति। प्रत्यक्षतः एतेषान्तत्त्वानां तत्समानानां वाऽन्येषां भावानां विकासो हिन्दूनां विभिन्नधारास्वप्यभवत्। सत्यमिदम्, यद्यवनेषु साम्प्रदायिकः पक्षपातोऽनुस्यूतो विद्यते। स च यदा कदा उन्मादरूपमपि गृह्णाति, एवन्तेषां जीवनदृष्टिकोणोऽत्यन्तं संकुचितोऽस्ति, परमेतन्निराकरणस्योपायो भारतीयप्राचीनोदारसंस्कृतेः सम्पर्क एवास्ति। आंग्लानामागमनात् पूर्वं पारस्परिकादानप्रदानानुकूलायां भारतीयधारायामेव यवनानामपि एका सहजा संशोधिता जीवनप्रणाली विकसन्त्येवासीत्, परञ्च तन्मध्ये एव आगत्य ते तां विघटयामासुः। अद्यापि निष्कलुषे ग्राम्यजीवने स भावोऽवशिष्यते, काव्यकलासाहित्येषु चामृतायते, विभिन्नधार्मिकसम्प्रदायेषु, मठेषु, मन्दिरेषु, गृहस्थानां सदनेषु, ग्राम्याणां गोष्ठीषु आद्रियते सम्पूज्यते च। आर्येषु हिन्दुषु भारतीयेषु वा वैष्णवाः शाक्ताः शैवा आर्यसमाजिनो ब्रह्मसमाजिनः कबीरदादूगरीबदासादिपन्थिनः जैनाः शिष्याः ( सिक्खाः ) बौद्धाः वेदवादिनो विरोधिनो वा आस्तिकाः नास्तिकाः वा आमिषभोजिनो निरामिषभोजिनो वा प्रतिमापूजकास्तद्भंजका वा हिन्दव एव यदि, तर्हि कुरानशरीफमनुसरतां सदाचारिणां यवनानां हिन्दुत्वे कथञ्चावकाशः ? यदि "सर्वदेवनमस्कारः केशवं प्रतिगच्छति", "अनन्ताश्च विश्वेदेवाः" तदा नमाजस्य मुहम्मदस्यैव च तत्र कथन्न समावेशः ? अतस्तां धारां सुसंस्कृतां सुपरिस्कृतां विधातुं प्रयत्नोऽपेक्ष्यते। एतामेव धारामालम्बमाना ईसाईपारसीकादयोऽपि भारतीयाः स्युरिति किं कस्य छिन्नम् ?

जातीयवैषम्यातिरिक्तम् अद्यत्वे सामाजिकजीवने आर्थिकवैषम्यमपि स्वीयां परां काष्ठामतिक्रामति। मानवानां पवित्रश्रमस्य मूल्यं रोटिकाशकलैरपि तिरस्कृतमस्ति। राजनीतेः समाजनीतेर्धर्मनीतेश्च महाचक्रं मुष्टिमेयानां स्वार्थिनां विलाससाधनसज्जने प्रवृत्तमस्ति। समाजस्य भौतिकं कलेवरम् उत्सन्नं बोभूयते, मानसिकं धैर्यं सहिष्णुता चातिशयेन प्रच्युते स्तः। भारतीया

संस्कृतिर्यद्यास्य संस्तम्भनं सन्तोलनञ्च न करोति तर्हि विवशो जनसमाजः स्वीयप्राक्तनसमस्तेतिहासं विस्मृत्य जडसभ्यतां संश्रयिष्यति। महात्मना गान्धिनाऽस्य एकमुपयुक्तं समाधानं प्रस्तुतम्, तद्धि समस्तजडसभ्यतां निर्भयं तिरस्करिष्यति, तच्च उत्पत्तिसाधनानां निखिलसम्पत्तीनाञ्च विकेन्द्रीकरणं यन्त्रवादाज्जीवनवैमुख्यञ्च। एतदर्थं प्रागुक्तसंस्कृतिप्रेरणाया अनवरतं प्रवाहोऽपेक्ष्यते येन गान्धिनः श्रममूला संस्कृतिः समुदियात्, यया अपरिग्रहद्वारा त्यागद्वारा वा समाजस्य आर्थिककोणः समूलं परिवर्तयितुं शक्यते। त्यागापरिग्रहावाप्तस्य समाजस्येदं भावि नवनिर्माणं भारतीयसंस्कृतेः प्रायोगिकं परीक्षणमस्ति। एतदर्थं 'भोगवाद' 'दलवादाभ्यामपि पराङ्मुखैर्भाव्यम्। भोगवाद-दलवादौ आधुनिकपाश्चात्यसभ्यताया निकृष्टतमे पद्धती स्तः।

भोगवादो वर्तमानभौतिकजीवनेऽसन्तोषमुत्पाद्य मानवप्रगतिमपेक्षते। स चेदं न स्वीकरोति यत् असन्तोषस्यादिमध्यौ असन्तोषपर्यवसायिनावेव स्तः, तस्यान्तस्तु अनिश्चित एवास्ति। अयञ्च भोगवादिदृष्टिकोणो भारतीयसंस्कृतेर्मूलतो विरोधी विद्यते। स हि जीवनं त्यागतपोभ्यामाकृष्य भोगप्रधानमाकल्पयति। दलवादेन ममायमभिप्रायः—कमपि सिद्धान्तमाधारीकृत्य अनन्तप्रलोभनान्यारचय्य अनिश्चितकालाय जनसंघटनम्। सिद्धान्तप्रवर्तकस्य मूलभावः कामं पूतोऽस्तु नाम, किन्तु तन्मूलकजनसंघटनं जातीयव्यवस्थायामिव उत्तरोत्तरं संघटनमेव प्राधान्यं लभते, लोकमंगलन्तु अप्राधान्यमाश्रित्य मृतमिव भवति। कर्मकाण्डगत-रूढ़िभिराक्रान्ता एते वर्गा निखिलाननर्थान् सृजन्ति, दलीयदम्भपाखण्डाभिनिवेशैश्च लोककल्याणं भृशमाम्लायते।

सर्वसम्मतमिदं यत् लोककल्याणस्य तत्त्वं एकस्मिन्नेव कस्मिंश्चित् सिद्धान्ते दले वा नास्ति, अपितु तस्य पोषकतत्त्वानि अन्येष्वपि उपलभ्यन्ते। मनुष्ये सततं जिज्ञासा, विचारसहिष्णुता, सामञ्जस्यम्, बुद्धेः स्वातंत्र्यञ्चापेक्ष्यते। मनुष्याणामियम् उदात्तवृत्तिः, व्यक्तित्वस्य चेदं स्वातन्त्र्यं, वर्गीयदीक्षयैवापसर्तुमारभते। वस्तुतो व्यक्तिस्वातन्त्र्यम् एका सजीवा सत्ताऽस्ति, अतस्तद् यथासंभवं जागरूकं सावधानञ्च कर्तुं प्रयतेत, यतस्तत्र जगन्मङ्गलस्य बीजरक्षणमस्ति। प्रजातन्त्रसाफल्याय दलनिर्माणस्याऽऽवश्यकता प्रस्तूयते, किन्तु वस्तुगत्या दलवादः केनापि रूपेण भोगवादस्य दाम्भिकपूर्तिमेव विदधाति।




# नाम-मीमांसा

पं० अनन्तशास्त्री फड़के

( गवर्नमेन्ट सं० कालेज, काशी )

अस्ति ब्राह्मणादिवर्णानां षोडशादिसंस्कारेष्वन्यतम एको नामकरणसंज्ञकः संस्कार-विशेषः । यस्य हि विधानं प्रायः सर्वस्मृतिकारैः सूत्रकारैर्निबन्धकारैश्च कृतमुपलभ्यते, परन्तु तदनुसारि नामकरणं नाधुना नातिप्राचीनकालेऽपि सार्वत्रिकं संपादितं दृश्यते । नामकरणप्रयोजनं बृहस्पतिना प्रतिपादितमेतद्—

नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः ।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥ इति ।

नामकरणकालो बृहस्पतिप्रभृतिभिः—

दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे ।
षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् ॥ इत्यादिप्रकारैरनेकविधः प्रोक्तः ।

तच्च नाम चतुर्विधं पञ्चविधं वा प्रयोगकाराः स्मृतिसूत्रादिकमाश्रित्य प्रतिपादयन्ति । तथाहि, कुलदेवतासम्बद्धं प्रथमं नाम, कृष्णानन्तादिकं मार्गशीर्षादिमासतः, वैकुण्ठादिकं चैत्रादिमासतो वा मासनाम द्वितीयं, यस्मिन्नक्षत्रे जन्म तन्नक्षत्रवाचकशब्दात्तत्र जात इत्यधि-कारविहिततद्धितप्रत्यये कृते निष्पन्नं कार्तिकरौहिणेत्यादिकं वा चूचेचोलेत्यादिज्योतिर्ग्रन्थोक्तावकहडादिचक्रानुसारं चूडामणि-चेदीशेत्यादिकं वा, लगधप्रोक्ताग्निप्रजापत्यादिनक्षत्रदेवताश्रयं वा बौधायनशादिसूत्रावलम्बनेन नाक्षत्रं नाम तृतीयम् । एतच्चाभिवादनीयमित्यपि स्मृतिसूत्रकारा
५२ आमनन्ति, किञ्चैतद् गोपनीयं यावदुपनयनं मातापितरावेव विद्यातां.मान्यः कश्चिदिति । उक्तं चाश्वलायनेन "अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्"

शौनकेनापि—

अभिवादननामेदमस्येत्यालोच्य चेतसा।
उपांशु निर्दिशेच्चैतन्न जानीयुर्यथा परे।
तच्च नामौपनयनं स्मरेतां पितरौ शिशोः॥ इति।

चतुर्थं व्यावहारिकं नाम पञ्चमं पित्रादिभिः स्वरुच्यनुसारं बाबू-बेटा बच्चेत्यादिकं कृतम्। परन्तु पञ्चमनामकरणं प्रायः सर्वनिबन्धकारैर्न लिखितं न वा बौधायनाश्वलायनादिभिः प्रतिपादितम्। व्यावहारिकचतुर्थनाम्नो विषय एवातिप्राचीनकालतोऽद्ययावद्धार्मिकेष्वपि कुलेषु नात्यादरो दरीदृश्यते। व्यावहारिकनामप्रकार आश्वलायनसूत्रकार इत्थं प्रतिपादयति—"नाम चास्मै दद्युः। घोषवदाद्यन्तरन्तस्थमभिनिष्ठानन्तं द्व्यक्षरं चतुरक्षरं वा, द्व्यक्षरं प्रतिष्ठाकामः चतुरक्षरं ब्रह्मवर्चसकामः। युग्मानि त्वेव पुंसामयुजानि स्त्रीणामिति"। अस्यार्थः—कवर्गादिषु तृतीयचतुर्थपञ्चमवर्णहकारान्यतमवर्णाद्यावयवकं यरलवान्यतममध्यवर्णयुतं विसर्गान्तं युग्माक्षरं पुंसामयुग्माक्षरं स्त्रीणां कार्यम्। अक्षरमत्र स्वरो व्यञ्जनेषु च न नियमः। यथा भद्रः, देवः, भवनाथः, इत्यादि।

महाभाष्यकारेण श्रीपतञ्जलिनापि—"याज्ञिकाः पठन्ति दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात्। घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति।

अत्र कैयटः—"त्रिपुरुषानूकमिति नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्तानतुकायत्यभिधत्त इति त्रिपुरुषानूकम्। उद्योते अनरिप्रतिष्ठितं अमनुष्ये अरिमित्रे इति वार्थः।

आश्वलायनेनापि—"नाम पैतामहं शस्यं यादृशं वा द्विजन्मसु" इत्यनेन महाभाष्योक्तमनुमतम्। आपस्तम्बादिसूत्रे तु प्रातिपदिकोपसर्गादिधात्वन्तं हिरण्यदा—सुश्रीप्रभृतिकं प्रतिपादितम्। तच्च व्यावहारिकं शर्मपदान्तं देवपदान्तं वा ब्राह्मणस्य, वर्मान्तं राजपदान्तं वा क्षत्रियस्य, गुप्तेति दत्तेति या पदं वैश्यनाम्नोऽन्ते, दासान्तं शूद्रस्य च कार्यमिति मनु-व्यास-यमादिस्मृतितो ज्ञायते। स्त्रीणां नाम विषये मनुना विशेषः प्रदर्शितः—

'स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्'॥ इति।



सुखोद्यं सुखोच्चार्यं, अक्रूरं हिंसाद्यर्थरहितं, मनोहरं कमनीयदेव्यादि, मङ्गल्यं सुभद्रेत्यादि, दीर्घवर्णान्तं सुमित्रेत्यादि, आशीर्वादाभिधानवत् सौभाग्यवतीत्यादिकम्। अत्र

'तत्तत्स्त्रीणां तथा तथा' इत्याश्वलायनस्मृतेः तत्तद्वर्णानां स्त्रीणां कन्यकानां वा शर्मवर्माद्यन्तं नाम कुर्यादिति सिद्ध्यति। एवं च गार्गीशर्मेति, 'मनः' इति नान्तलक्षणङीपः प्रतिषेधात्सिध्यति। नद्यादिनामयुताभिः कन्यकाभिः साकं विवाहनिषेधो मनुना प्रादर्शि, नोद्वहेदित्यनुवृत्तौ.

'नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्।

न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्' ॥ इति।

एतस्मिन्सर्वस्मिन् शास्त्रार्थे स्थितेऽपि प्रदर्शितविधानुसारीणि नामानि नैकेषु कुलेषूपलभ्यन्ते। यथाऽङ्गिरोगणे कौमण्ड, मामन्थरेषण, करेणुपालि, दीर्घतमस्, बृहदुक्थप्रभृतीनि, भरद्वाजगणे ऋक्ष, कपि, देवाश्व, सरवनि, कपिलादीनि, केवलाङ्गिरोगणे कुत्स, सुभग, रथीतर, शठेप्रमुखानि, अत्रिगणे गविष्ठिर, वाद्भुतकप्रधानानि, विश्वामित्रगणे कुशिक, लोहित, अज कतप्रकाराणि, कश्यपगणे रेभ, शण्डिलादीनि, वसिष्ठसङ्घे कुण्डिनरूपाणि, अगस्तिगणे पूर्णमास, हिमोदक, पणिकप्रभृतीनि सर्वथा विधानविपरीतानि। सांप्रतिके काले, तु किमु वक्तव्यं ब्राह्मणादिकुलेषु जार्जप्रभृतीनि पुरुषाणां, स्त्रीणां च नन्दा, कुन्दा, मन्दाप्रभृतीनि समुपलभ्यन्ते। अत्र सर्वत्र प्राचीननामसु सांप्रतिकाभिधानेषु च घोषवदाद्यन्तरस्थनियमत्यागः सुस्पष्ट एव। कदाचिदस्य हेतुः आश्वलायनसूत्रे युग्मानि त्वेव पुंसामयुजानि स्त्रीणामित्यत्रैवकारसूचितः कारिकाकारेण स्पष्टीकृतः पक्षो घोषवदित्यादिरेवकारादनादृतः—इति स्यात्। परन्त्वत्रापि 'पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम् इत्याकारको नियमोऽस्त्येव। कदाचिन्ना-[[मकरणस्य]]व्यवहारसिद्ध्यर्थत्वान्न प्राचीनकालतोऽत्रादराधिक्यमित्यपि हेतुः संभवेदिति शम्।

---

# अनङ्गदेशः ( बलियामण्डलम् )

पं० रामाज्ञापाण्डेयः

( सरस्वती भवन काशी )

श्रुतिस्मृतिप्रोक्तविधावशक्तिकैरुदीर्य वेदं कुपथप्रसारिभिः ।
प्रवर्त्तितात् त्रातुमधर्मतो जगद् विभाति विद्वत्परिषद्धितैषिणी ॥ १ ॥

स्वतन्त्रेऽस्मिन् भारते अस्माकं परमं कर्तव्यमापतितमस्ति यद् वयं स्वीयं पुरातनं गौरवं संसारस्य समक्षं रक्षेम । अथ च तदनुसारम् अग्रे वर्धितुं प्रयत्नं च कुर्याम । अस्मिन् समये वयं तमेव विषयं जनतायाः समक्षम् उपस्थापयामो यो हि चिरकालात् उपेक्षित आसीत् ।

'अभिधावृत्तयो नूनं यात्रिणो ये समागताः ।
पण्डायां क्षीणशक्तित्वान्नैव गच्छन्ति पण्डितान्" ॥

इति सदुक्त्यनुसारं तीर्थानां प्रसिद्धिरद्यत्वे पण्डापदवाच्यानामेव प्रयत्नेन भवति । वयं च पण्डिताः प्रहरिसदृशा दौवारिका वा धर्मस्य रक्षां कुर्मः फलं तु भुञ्जते पामरा एव ।

पुरा काले यदेयं वर्णत्रयी वेदादिविद्यास्थानैर्विभूषिताऽसीत्तदा प्रतारकास्तां वञ्चितुं न समर्था अभूवन् । तस्मिन् समये शास्त्रप्रामाण्येनैव सदसद्विवेकः कृतोऽभवत् । 'परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा । अतीव पुण्यमागास्ते सलिलस्य च तेजसा ॥' इति महाभारत-वचनानुसारं वीतकल्मषाणां महात्मनां स्थितिः, पृथिव्या विशिष्टं तेजः, सलिलस्य च काय-वाङ्मानसविशुद्धिकरणसामर्थ्यं चेत्येतत् त्रयं तीर्थानां महत्त्वप्रयोजकमासीत् ।

शिक्षिता मानवा जानन्ति यद् वाल्मीकीयरामायणं संस्कृतसाहित्यस्य प्राचीनतमं ग्रन्थ-रत्नमस्ति । तद्वाल्मीकीयरामायणानुसारं गङ्गासरयूमध्यवर्तिप्रदेशस्यैव नाम 'अनङ्ग' देशोऽस्ति ।

यद्यपि निर्णयसागरमुद्रिततिलकटीकोपेतरामायणानुसारम् अयं प्रदेशो 'भर्गाश्रम' इति पदेनापि व्यवहर्तुं शक्यते । अस्यैव भर्गाश्रमस्यापभ्रंशो 'भगरासन' शब्दोऽपि तत्र प्रदेशे व्यव-

हृतोऽस्ति । यथा ( वा. रामायण आदिकाण्डे सर्गे—२२—श्लो. २४ ) ऊषुस्तां रजनीं तत्र सरय्वां ससुखं त्रयः । ( टीका—सरय्वां तत्तीरे । ) सर्ग २३ श्लो० १

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।
अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १ ॥
कन्दर्पो मूर्त्तिमानासीत् काम इत्युच्यते बुधैः ।
तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ १० ॥
कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् ।
धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ ११ ॥
अवध्यातश्च रुद्रेण चक्षुषा रघुनन्दन ।
व्यशीर्यन्त शरीरात् स्वात् तस्य गात्राणि दुर्मतेः ॥ १२ ॥
अशरीरः—कृतः कामः क्रोधाद्देवेश्वरेण ह ॥ १३ ॥
अनङ्ग इति विख्यातस्तदाप्रभृति राघव ।
स चाङ्गविषयः श्रीमान् यत्राङ्गं प्रमुमोच ह ॥ १४ ॥
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा ।
शिष्या धर्मपरा वीर तेषां पापं न विद्यते ॥ १५ ॥
इहाद्य रजनीं राम वसेम शुभदर्शन ।
पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥

( टीका—तत्र भयात् पलायमानो यत्र देशे स कामः अङ्गं मुमोच सः अङ्गविषयः अङ्गदेश इति विख्यात इति शेषः । तस्य= स्थाणोः । इमे मुनयः= इदानीमिह तपस्यन्तः । तस्य = रुद्रस्य । पुरा = पूर्वकाले । सन्तानपरम्परया शिष्या अत एव धर्मपराः । अत एव तेषां पापं न विद्यते । मूलम्—'न्यवसन् ससुखं तत्र कामाश्रमपदे तथा ( श्लो. २२ ) टीका—कामाश्रमपदे = सर्वकामप्रपूरके भर्गाश्रमे । एतत्पाठानुकूलं तस्य देशस्य नाम 'अङ्ग' देशोऽभवद् यत्र कामः शरीरं तत्याज । भागलपुरप्रान्तः अङ्गपदेनोच्यते । महाभारते कर्णशल्यसंवादे अस्य देशस्य वर्णनं पूर्णरूपेण विद्यते । कर्ण एवाङ्गाधिपतिरासीत् । गङ्गासरयूमध्यवर्ती प्रदेशस्तु
 भर्गाश्रमपदेन व्यपदिष्टोऽभूत् ।

यद्यपि अस्य प्रदेशस्य प्रसिद्धिः 'भृग्वाश्रम' पदेन भवति । भृगोर्महर्षेः प्रतिमाऽपि

तत्र वर्तते।

तथापि वाराहपुराणानुसारं हरिहरक्षेत्रमपि भृग्वाश्रमपदेन बोध्यम्। यत्र हि गजग्राहयोर्युद्धमभवत्। अत्र बलियाप्रान्ते बलिर्वामनाय पादत्रयमितां भूमिमदात् तत्र च दैत्यगुरोर्भृगोः स्थितिरासीदेवेतीदमपि स्थानं भृगुक्षेत्रं कथयितुं शक्यते।

सोनपुरस्थमेव हरिहरक्षेत्रम् अन्यद् वा हरिहरक्षेत्रमिति शङ्का न कार्या। हरिहरप्रभम् त्रिवेणीसङ्गमादुपरि तदपि हरिक्षेत्रमिदमपि च हरिहरक्षेत्रम् उभयोर्देवयोरत्रापि वर्तमानत्वात्।

[ वाराहपु अ. १४५ श्लो ११२–वाराह. अ. १४४. श्लो १६३-१६४ अ. १४५ श्लो. ११२, ११३, ११४ ]

अपरा देविका पुण्या गण्डक्या सह संगता।
पुलस्त्यपुलहौ पूर्वं तेपाते परमं तपः ॥ (वा. अ. १४४ श्लो. १२९)
गण्डक्यामेव सञ्जातो ग्राहः पूर्वस्मृतिर्द्विजः।
त्रिवेणीक्षेत्रमध्ये तु जयोभूद्वै महागजः ॥ ( श्लो. १४२ )
गोधनान्यग्रतः कृत्वा हरिक्षेत्रं जगाम ह।
हरिणाधिष्ठितं क्षेत्रं पूजनीयं बतः स्मृतम् ॥ १६३ ॥
यदा नन्दी शूलपाणिर्गोधनेन पुरस्कृतः।
स्थितवांस्तद्दिनादेतत् ख्यातं हरिहरप्रभम् ॥ १६४ ॥

[ वाराह अ. १४५ श्लो. १११–११२–११३, १४४ ]

मुक्तिक्षेत्रं प्रथमतो रुरुखण्डन्ततः परम्।
सम्भेदो देवनद्योश्च त्रिवेणी च ततः परम् ॥ १११ ॥
क्षेत्रप्रमाणं विज्ञेयं गण्डकीसंगतं परम्।
एवं सा गण्डकी देवी नदीनामुत्तमा नदी ॥ ११२ ॥
गङ्गया मिलिता यत्र भागीरथ्या महाफला।
अपरं तन्महत् क्षेत्रं हरिक्षेत्रमिति स्मृतम् ॥ ११३ ॥
आदौ सा गण्डकी पुण्या भागीरथ्या च संगता।
तस्य तीर्थस्य महिमा ज्ञायते न सुरैरपि ॥ ११४ ॥

वाराहपुराणम् अ-१४६ श्लो. ४९—

इति निश्चित्य मनसा गत्वा भृग्वाश्रमं प्रति ।। ४९ ॥
गण्डकीसंगमे स्नात्वा सन्तर्प्य पितृदेवताः ॥
विष्णुं शिवं च सम्पूज्य तपःस्थानं विचिन्तयन् ।
पश्यन् भृग्वाश्रमं रम्यमुत्तरं गतवान् शनैः ।

अधस्तात् 'स चाङ्गविषयः श्रीमान् यत्राङ्गं प्रमुमोच ह' इति पाठानुसारं पलायमानः कामो यत्र देशे अङ्गं मुमोच सोऽङ्गपदेन व्यपदिष्टोऽभवदित्युक्तम् । तन्न सम्यक् । यत्र हि कामः शरीरं जह्यात् तस्य अनङ्गपदेनैव प्रसिद्धेर्युक्तिसंगतत्वात् । किञ्च ब्रह्माण्डपुराणानुसारं बलेः पुत्राणाम् अङ्ग-वङ्ग-कलिङ्ग-सुह्म-पुण्ड्राणां नाम्नैव एषां देशानां नाम्नः प्रसिद्धेः सुसम्मतत्वात् । वक्ष्यमाणस्य प्राचीनपाठस्य युक्त्यनुकूलत्वेन 'अनङ्ग' पदेनास्य देशस्य प्रख्याततायाः स्वारस्याच्च । पश्यन्तु भवन्तः प्राचीनपुस्तकानुसारं पाठभेदम्—

( वाल्मीकीयरामायणम्—आदि स. २५ श्लो. ८ )

'विश्वामित्रं महात्मानं तावुभौ रामलक्ष्मणौ ।
तदानुजग्मतुर्वीरौ यथेन्द्रं देवमश्विनौ ॥ ८ ॥

।९। अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।१०—२०। तत्रोवास निशामेतां सरय्वां सहलक्ष्मणः ।२१। ( सर्गं २६ श्लो. १ ) प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः । अभ्यभाषत काकुत्स्थं शयानं पर्णसंस्तरे ।१।२। तस्यर्षेः परमोदारं वचः श्रुत्वा तु राघवौ । स्नात्वा कृतोदकौ वीरौ जेपतुर्जाप्यमाह्निकम् ।३।।४। ततः प्रययतुश्चापि दिव्यां त्रिपथगां नदीम् । गङ्गां देवनदीं द्रष्टुं सरय्वा अविदूरतः ।५। तस्यास्तीराश्रमपदमृषीणां पुण्यकर्मणाम् । रम्यं ददृशतुः पुण्यं तप्यतामुत्तमं तपः ।६। दृष्ट्वा तदाश्रमपदं जातकौतूहलौ मुनिम् । पप्रच्छतुस्तदा तत्र तावुभौ रामलक्ष्मणौ ।७। कस्यायमाश्रमो ब्रह्मन् कश्चास्मिन् कुशलो मुनिः । भगवन् श्रोतुमिच्छावः परं कौतूहलं हि नौ ।८। तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिरब्रवीत् । उभाभ्यां श्रूयतां राम यस्यायं पूर्वमाश्रमः ।९। कन्दर्पो मूर्त्तिमानासीत् काम इत्यभिविश्रुतः । स्थाणुं स इह तप्यन्तं पुरा किल महत्तपः ।१० आवेष्टुमभ्ययात् तूर्णं कृतोद्वाहमुमापतिम् । बुद्ध्वा स तत्र रुद्रेण शप्तः किल महात्मना ।११। अथ शप्तस्य रुद्रेण तस्यैव रघुनन्दन । रोषशापाग्निनिर्दग्धं तच्छरीरं
 व्यशीर्यत ।२। तस्याङ्गान्यपतन् राम सद्यः सर्वाण्यशेषतः । अशरीरः कृतः काम एवं कोपान् महात्मना ।१३। अनङ्ग इति विख्यातस्ततः प्रभृति राघव । अनङ्ग इति देशोऽयं ख्यातः कामाङ्ग-

नाशनात् ।१४। तस्यायमाश्रमः पुण्यः कामस्य रघुनन्दन। तस्यायतनमत्रेदं तस्येमे परमर्षयः ।१५। तपोद्मरताः सर्वे पुराणा ब्रह्मवादिनः। निवसन्त्यत्र निरतास्तपोनिर्धूतकल्मषाः ।१६। इहाद्य रजनीमेकां वसामः शुभदर्शन । पुण्ययोः सरितोर्मध्ये तरिष्यामः परेऽहनि ।१७। अभिगच्छाम च स्नात्वा शुचयः पुण्यमाश्रमम्। इह कामाश्रमे राम सुखं वत्स्यामहे निशाम् ।१८।१९। २०। सत्कारं परमं प्राप्य कथाभिरभिरस्य च। न्यवसंस्ते महात्मानः कामाश्रमपदे तथा ।२१। (सर्ग २७ श्लो १–)

ततः प्रभाते विमले कृताह्निकमरिन्दमौ। विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपेयतुः ।१।२।३।

विश्वामित्रस्तथेत्युक्त्वा तानृषीन् प्रतिपूज्य च । तगार सरितं पुण्यां सरयूं विमलोदकाम् ।४।—एतद्ग्रन्थदर्शनेनास्य देशस्य 'अनङ्ग' इति नाम पुण्यतमत्वं च स्पष्टं प्रतीयेते । यद्यपि भगवता रामचन्द्रेण गङ्गाया दक्षिणे तटे समुपस्थातुं गङ्गायामेव नौरारोढव्या तथापि दूरदर्शिभिर् ऋषिभिः पुण्यातिशयप्रापणार्थं संगमं दक्षिणावर्तं कारयितुं सरय्वामेव नौः सज्जीकृतेति गूढोऽभिप्रायः प्राचेतसस्य महर्षेः । अद्यापि 'कामाश्रम'पदस्यापभ्रंशः 'कारों' नामको ग्रामो बलियामण्डले जागर्ति। बलियाशब्दोऽपि बलियागपदस्यैवापभ्रंशः इति माननीयाः श्रीसमापतिमहोदयाः। तत्रैव कामेश्वरनामकं शिवलिङ्गमपि प्रसिद्धं विद्यते। ग्रामीणा मनुष्या इमामाख्यायिकामद्यावधि जानन्ति। एतन्मण्डले एव 'लखनेसर' डीहेति नाम्ना प्रसिद्धः खण्डगृहसमूहो भूभागस्तत्र पुरातत्त्वानुसंधायिनां कृते राजते । यत्रास्मिन्नेव वर्षे दिव्या एका भगवतो विष्णोः प्रतिमा त्रुटिरहिता समुद्भूता। यां हि तत्रत्यास्तत्रैव पूजयन्ति नानुमोदन्ते लखनऊनगरं नेतुम् ।

'रतसंड' नामको ग्रामो 'रतिषण्ड'शब्दस्यापभ्रंशोऽत्रैव प्रदेशे विराजते। 'षण्डशब्दः काननवाचकोऽपि वर्तते 'अब्जादिकदम्बे षण्डमस्त्रियाम्' (अमर-वारिवर्गे श्लो. ४२) 'षण्डः स्मृतो बलीवर्दे षण्डं तु कानने भवेत्' इत्यजयः । इत्युक्तकोशप्रामाण्यात्। तथा च रतिषण्डमित्यस्य रतिकाननमित्यर्थः। एवं च कामाश्रमस्य रामायणतः सिद्धत्वात् रतेः केलिकाननं नितरामपेक्ष्यते । तदेव रतिषण्डपदमपभ्रष्टं रतसंडरूपेण परिणतं जातम् । 'वृक्षषण्डमितो भाति पर्वतस्याविदूरतः' इति रामायणे काननार्थकस्य समूहार्थकस्य वा षण्डशब्दस्य प्रयोगो बहुधा दृश्यते । अधुनापि बलियामण्डले संडपदघटितानां हंडपदयुक्तानां च ग्रामाणां नामानि समुपलभ्यन्ते यथा रतसंड, जिगिरसंड, अगरसंड टकरसंड, मल्लुसंड, छोडहंड दूबहंड इत्यादि।

रतिषण्डम्, योगिषण्डम्, अगरषण्डम्, तगरषण्डमित्यादयः संस्कृतशब्दा मूलभूताः प्रतीयन्ते तेषां पूर्वोक्तानां शब्दानाम्।

भगवान् वृषभध्वज इमं प्रदेशं पवित्रतमं मत्वैव काशीं विहायात्रैव तपस्तप्तुमारमत। कृतोद्वाहः ( समाधेः कृतव्युत्थानः ) शूलपाणिर्भगवान् कामकृतां धर्षणामसहमानः कामं ददाह। तद्दाहाधारभूतो देशोऽयमनङ्गनाम्ना प्रथितोऽभवत्।

भगवतो रामचन्द्रस्य पितामहो महाराजः अजः सप्तानां पुरीणामन्यतमां स्वकीयां राजधानीमयोध्यां विहाय गङ्गासरयूसंगम एव देहं जहौ। तथा च कालीदासः—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोर्देहत्यागादमरगणनालेख्यमासाद्य सद्यः। पूर्वाकाराधिकतररुचा संगतः कान्तयासौ लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु॥ (रघु.सर्ग८श्लो.९५.) स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः। विग्रहेण मदनस्य चारुणा सोऽभवत् प्रतिनिधिर्न कर्मणा।१३। ( रघु. स. ११. श्लो. १३ ) तन्नाम्ना प्रथितः 'अजनेरा' ग्रामो रतसंडसमीपेऽद्यापि वर्तते। अयं हि नेरा शब्दो नगरशब्दस्यैवापभ्रंशः यथा बीकानेर, अमलनेरेत्यादि। प्राकृतभाषायां नगरशब्दस्य स्थाने नेरशब्दः प्रयुज्यते।

भूगोलस्थितिमजानाना बहवो विद्वज्जना रामायणीयं कियन्तमितिवृत्तान्तांशं त्यजन्त आधुनिकान् भ्रमे पातयन्ति। यथा चम्पूरामायणे ( बालकाण्डे-श्लो. ३८. ) अस्मिन् पुरा पुरभिदः परमेश्वरस्य भालान्तरालनयनज्वलने मनोभूः। सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥' इति पद्येन गङ्गासरयूमध्यस्थप्रदेशस्य 'अङ्ग' इतिनाम प्रतीयते। तथा चायमङ्गदेशोऽत्यन्तं विस्तृतो वङ्गसीम्ना संलग्नोऽभवत्। परमेतन्मतं न युक्तियुक्तं पूर्वोदाहृतरामायणीयप्राचीनपाठप्रामाण्यात्। यश्च रामायणे 'स चाङ्गविषयः श्रीमान् यत्राङ्गं प्रमुमोच ह, इतिपाठो दृश्यते' स हि लेखकभ्रान्त्या 'सोऽनङ्गविषय' इत्यस्य स्थाने 'स चाङ्गविषय' इत्येवंरूपेण प्रचरितोऽभवत्' 'तस्मादमुं जनपदं विदुरङ्गसंज्ञम्' अयमंशश्च पूर्वोक्तयुक्त्या वक्ष्यमाणब्रह्माण्डपुराणप्रामाण्याच्च न साधुः। तथाहि ब्रह्माण्डे-उपोद्घातपादे चतुःसप्ततितमेऽध्याये बलेर्भार्यायां सुदेष्णायां दीर्घतमसः अङ्गवङ्गकलिङ्गसुह्मपुण्ड्राः पञ्च क्षेत्रजाः पुत्राः संजाताः, दैत्ययोनौ तव पुत्रा न भविष्यन्तीति शापाद् बलिर्योगशक्त्या मानुषे लोके विचरन् पञ्च पुत्रान् प्राप्य तांश्च तत्तद्देशेष्वभिषिच्य तन्नाम्ना देशानङ्कयित्वा पुनः पातालतलमाश्रित्य तत्रैव विराजते। दीर्घतमाश्च कक्षीवता पुत्रेण सह गिरिव्रजं गत्वा तपस्तेपे। तथा चाङ्गेति नाम्नो बीजं न हि कामदेवस्य अङ्गत्यागः। किञ्चायं प्रदेशोऽयोध्यासन्निहितः सरय्वा उभयतटवर्तिकोशल-

पदेनैव पुरा व्यपदिष्टोभवत्। तदेकदेशभूतोऽयमनङ्गदेशः यत्र हि दितिस्तपस्तेपे। स प्रदेशो विशाल पदेन व्यपदिष्ट आसीत्। तदनन्तरं पूर्वस्यां दक्षिणस्यां च दिशि भवेदङ्गदेशः; यस्य हि राजधानी रामायणसमये चम्पाऽऽसीत्। इयं हि चम्पा भागलपुरमण्डले साम्प्रतं विद्यते। यद्यपि जलस्य वायोश्च सुखावहत्वेन तपस्विनां स्थित्या च देशस्योत्तमत्वम्, तदभावाच्च गर्हितत्वं सदा व्यवतिष्ठते तथापि आर्याणां गौरवकाले अयं देशो गन्तव्योऽयं च न गन्तव्य इति नियमो नासीत् 'कृणुत विश्वमार्यम्' इयमेव पद्धतिस्तेषां लक्ष्यमासीत्। 'अङ्गवङ्गकलिङ्गेषु' इत्यादीनि वचनानि अवरकालभावीनि मन्तव्यानि। सम्भाव्यतेऽङ्गदेशस्थितिः पाटलिपुत्रादुत्तरपूर्वस्यां दिशि मगधानन्तरम्। रामायणानुसारं कश्यपस्य द्वयोर्भार्ययोः अदितिर्गङ्गाया दक्षिणे कूले तपस्तेपे। दितिस्तु वामे (उत्तरे तटे) इत्यायाति। अद्यावधि पञ्चानामेषामङ्गादीनां देशानां सीमा निर्धारयितुं न शक्यते। परं प्राचीनभूगोलविदो वक्ष्यमाणां सीमानं निर्धारयन्ति।

यच्च तत्रैव चम्पूरामायणे 'तदनु मानससरःप्रसृतां सरयूमतिक्रम्य वृत्रवधप्रवृद्धवृद्धश्रवः-पङ्कक्षालनलब्धमलयोर्मलदकरूशनाम्नोर्जनपदयोः सीम्नि कृतपदयोर्दाशरथ्योः पुनरप्येवमब्रवीत्।' इत्यनेन सन्दर्भेण सरयूतरणं प्रतिपादितं तन्न सम्यक्, तत्र सरयूतरणमित्यस्य कोऽर्थः, यदि सरयूमुत्तीर्य तस्या उत्तरतटं भगवान् रामचन्द्रो यायात् तदा मलदकरूशयोरुक्तिर्विरुध्येत, तयोर्गङ्गादक्षिणतटे वर्तमानत्वात्। यदि च चम्पूकारः सरयूमुत्तार्य संगममार्गेण गङ्गामुदतारयिष्यत् तदा न कश्चन विरोध आपतिष्यत्।

रामायणे तु प्राचीनपाठेषु सरय्वां नावमुपस्थाप्य तां च विश्वामित्रादीनारोप्य संगममार्गेण गङ्गामुत्तारयामासुस्ते तपोधनाः। एतच्च मया पूर्वं प्रदर्शितम्।

चम्पूरामायणकार इव नहि नागेशभट्टो भूगोलज्ञानविरहित आसीत्। अत एव (रामा. आदि. सर्ग २३ श्लो० १४) टीकायां 'ततो भयात् पलायमानः यत्र देशे स कामः अङ्गं मुमोच सः अङ्गविषयः=अङ्गदेश इति विख्यातः' इत्यवोचत्। अत एव तद्देशान्तर्गतस्य नगरस्य 'भागलपुर' इति नाम्ना प्रसिद्धिरभवत् ('जब कामदेव भागल तब भागलपुर नाम भइल।') हास्यैनैतन्मयोच्यते। वस्तुतस्तु भयात् पलायमानः कामो न गङ्गामुल्लङ्घ्य शरीरं जह्यात्, भागलपुरस्य गङ्गादक्षिणतटे वर्तमानत्वात्। वामतटेऽपि सरय्वा व्यवधायिकत्वात्, नदीमुत्तीर्य शरीरत्यागस्य युक्तिशून्यत्वात्। पूर्वोक्तनागेशभट्टोक्त्या प्रतीयते यन्नागेशभट्टो नेमं गङ्गासरयूमध्यवर्तिनं देशमङ्गपदेन व्यवहर्तुमैच्छत्। 

किञ्च (रा. आदि. स. ९ श्लो. ७-८-१९) एतस्मिन्नेव काले तु रोमपादः प्रतापवान्।७।

अङ्गेषु प्रथितो राजा भविष्यति महाबलः। 'एवमङ्गाधिपेनैव गणिकाभिर् ऋषेः सुतः'। १९) (श्लो० २८ टीकायां 'गङ्गायां पूर्वस्थापितां नावमारोप्य प्रवाहेणैव अङ्गदेशं निन्युरिति महाभारते'। गरेसियोमुद्रितपुस्तके अपरेषु च प्राचीनपुस्तकेषु 'नवमे सर्गे त्रिषष्टितमे श्लोके 'ऋषिपुत्रोऽपि धर्मात्मा नौयानवरमास्थितः।' ६३ इत्युक्तम्। अयं पाठो महाभारतसम्मतः। (सर्ग ११ श्लोक ४) 'पुत्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः।' अङ्गस्य अनन्तरः पुत्रः रोमपाद इत्यायाति' परं गरेसियो-मुद्रिते नेदृशः पाठः, तथाच यन्नाम्ना 'अङ्गदेशोऽभवत् तस्य साक्षात् पुत्रः रोमपाद ईदृशीं कल्पनां न वयं कर्तुं शक्नुमः, तादृशपाठे विश्वासाभावात्। (सर्ग ११ श्लोक १३-१४) सान्तः-पुरः सहामात्यः प्रययौ यत्र स द्विजः। वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः। १४। अभिचक्राम तं देशं यत्रासौ मुनिपुङ्गवः।' इत्युक्त्या अयोध्यातोऽतिदूरमङ्गदेश इत्यायाति, तथा च न हि गङ्गासरयूमध्यवर्ती प्रदेशोऽङ्गपदेन व्यवहर्तुं शक्यते।

अपि च गङ्गाया उत्तरतटस्थो गङ्गागण्डकीसंगमानन्तरं वर्तमानः विशालनाम्ना राज्ञा प्रसिद्धः विशाल इत्युच्यते। तदनन्तरमेवाङ्गदेशो भवेत्, न हि ततः पश्चिमायां दिशि।

यत्र हि गङ्गासरयूसंगमे अजो महाराजो देहत्यागमकरोत् स हि देशः किमङ्गाधिपेन पालितो भवेत्। ईदृशी संकुचिता सीमा कोसलस्य भवेत् किम्?। अङ्गदेशस्य राजधानी चम्पाऽऽसीदित्यत्र मानं च रामायणीयं वचनमेव। तथाहि ( ऋष्यश्रृङ्गोऽपि तेजस्वी प्रययौ क्रमशस्तदा। लोमपादस्य नगरीं चम्पां चम्पकमालिनीम्। ) (रा. अस. १७ श्लोक २३) अयं हि पाठो नहि तिलकादिटीकाभूषितेषु पुस्तकेषु दृश्यते। अपि च ऋष्यश्रृङ्गागमनवृत्तान्तोऽपि अत्यन्तं संक्षिप्ततयाऽऽधुनिकपाठ्युक्तेषु पुस्तकेषु वर्तते। प्राचीनेषु पुस्तकेषु तु हृदयग्राहिणो राज्ञो दशरथस्योपदेशा यज्ञे समायातान् नृपानुद्दिश्य दत्ताः प्रीणयन्ति चेतांसि पठतां जनानाम्।

तथाहि गरेसियोमुद्रिते पुस्तके आदि काण्डे सर्गे १६-श्लोक ५ )

सर्वे भवन्तः पश्यन्तु कार्यं विषयरक्षणम्।
भ्रष्टो हि विषयाद्राजा मृतकल्पः प्रदृश्यते ॥५॥
तस्मात् स्वविषये रक्षा कर्तव्या भूतिमिच्छता।
यज्ञैर्नावाप्यते स्वर्गो रक्षणात् प्राप्यते यथा ॥ ६ ॥
यथा हि पुरुषः कुर्याच्छरीरे यत्नमुत्तमम्।
वसनाद्यैरुपायैस्तु तथा राज्ये नराधिपः ॥ ७ ॥

अनागतविधानं च कर्तव्यं विषये नृपैः ।
आगमश्चापि कर्तव्यस्तथा दोषो न जायते ॥ ८ ॥
एवं समादिशद्राज्ञो राजा श्रुत्वा च तं नृपाः ।
अन्योऽन्यं संविदं कृत्वा प्रयाताः सर्वतो दिशः ॥ ९ ॥

शान्तायामृष्यशृङ्गेण भर्त्रा सह लोमपादनिवेशने समुपस्थितायाम्, विभाण्डके च मुनौ ऋष्यशृङ्गजनके तत्र समायाते अन्तःपुरस्त्रियः शान्तां तं निवेदयामासुः—

तथाहिः—

तस्थुः प्राञ्जलयः सर्वे समासाद्य द्विजोत्तमम् ।
ततः शान्तां पुरस्कृत्य ताः स्त्रियः समलंकृताम् ॥ २३ ॥
न्यवेदयन्त विप्राय स्नुषेयं तव मानद ।
प्रतिगृह्य स तां शान्तां समालिङ्ग्य च धर्मवित् ॥ २४ ॥
अङ्के निवेश्य च तदा विस्मयं परमं गतः ।
द्विजोत्सङ्गात् समुत्थाय साऽभिवाद्य तदा द्विजम् ॥ २५ ॥
अविशत् प्राञ्जलिर्भूत्वा श्वशुरस्य समीपतः ।
सोऽनुज्ञाप्य ततः शान्तां राजानं चैव योषितः ॥ २६ ॥
प्रायश्चित्तं च कृतवान् पुत्रस्य द्विजसत्तमः ।
महर्षिभिः पूज्यमानः ससुतश्च वनं ययौ ॥ २७ ॥

एवंविधा बहवः श्लोकाः संदर्भशुद्ध्यर्थं यद्वा तादृशेतिवृत्तस्य तादृशे कालेऽसम्मतत्वात् ग्रन्थगर्भाद्दूरीकृता अन्ये च बहवः प्रक्षिप्ता अपीति प्रतीयते ।

अपरमपि किञ्चिद् वच्मि परमास्तिकः परममाहेश्वरः कालीदासः स्वकीये रघुवंशे मङ्गलमारचय्य स्वकीयं वैनयिकत्वं च प्रदर्श्य यया रीत्या काव्यं प्रास्तौषीत् सा रीतिः कुमारसम्भवे न दृश्यते । नापि भगवद्रूपवस्तुनिर्देशात्मकं मङ्गलं तत्रोपन्यस्तम् । तेन भिन्नोऽयं कालिदासः कुमारसम्भवस्य रचयिता रघुवंशप्रणेतुः कालिदासात् । उभयोस्तारतम्यं त्वत्र नाहमुपन्यसितुं समीहे । पुनरपि कस्मिंश्चिल्लेखे विचारयिष्यते ।

# श्रीसम्पूर्णानन्दसरस्वती-भवनस्य

# शिलान्यासः

उत्तरप्रदेशस्योत्तमामात्याः माननीयश्रीलगोविन्दवल्लभपन्तमहोदयाः सुचिरादुपेक्षितस्यास्य प्रान्तस्य ( अनङ्ग-देशस्य ) महिम्नः प्रख्यापनं समयप्राप्तमिति मत्वा श्रीसम्पूर्णानन्दसरस्वतीभवनस्य शिलान्यासमत्र रतसंडे ( 'रतसंड' बलिया ) कर्तुं स्वीचक्रुः। अन्वतिष्ठंश्च ते माघशुक्लैकादश्यां षडभ्रनवैकमिते वत्सरे वैक्रमे तत्र रतसंडे। एतद्भवननिर्माणानन्तरमेतत्प्रदेशस्य हस्तलिखितानां प्राचीनानां पुस्तकानां संरक्षणं छात्राणां विदुषां चात्र स्थित्या शास्त्राभ्यासोऽन्वेषणञ्च भवेत्, सहैव शरीरस्वास्थ्यमपि सवर्धितं भवेत्। नगरापेक्षया सास्प्रतं ग्रामे स्थित्वा जनताया ज्ञानप्रदानेनोपकारः कर्तुं युज्यते, जनताया राजकीयाधिकारिणां च दृष्टिं वयमाक्रष्टुं यतामहे यदत्रत्या मनुष्या गङ्गासरयूसंगमनिःसृतनूतनभूभागवर्तिनो नितरां प्रकृत्या प्रतिभाशालिनो भवन्ति। तेषां बुद्धेर्दुरुपयोगो मा भूत्, एतदर्थमीदृश्याः संस्थाया अत्र निर्माणं समयप्राप्तम्। यत्र हि धार्मिकीं शिक्षामधिगत्य बाला अपि तादृशीं दृष्टिं प्राप्य समाजस्योत्थापने समर्था भवन्तु। अस्य भवनस्य निर्माणार्थं न्यूनातिन्यूनं लक्षमितं द्रव्यं साम्प्रतमावश्यकम्। राजकीयकोशतोऽप्यस्मिन् कर्मणि साहाय्यं लप्स्यते। भवनस्य पूर्णतानन्तरं राजकीयाधिकारिणां हस्ते इयं संस्था निक्षेप्तव्या येन स्थायिनीयं स्यादिति च विचारोऽस्याः सदस्यानां वर्तते। राजकीयनियमानुसारमियं संस्था प्रान्तीयरजेष्टरीद्वारा रजिष्टर्ड ( प्रान्तीयनियमेन नियमिता ) संजाता। अस्या आयव्ययनिरीक्षणं च राजाधिकारिभिः कर्तव्यमिति निःशङ्कं जनताः साहाय्यदानेन पूरयन्तु कोशमस्या इति, भवन्तु पुण्यभाजो मानवा इति अनुमोदते काशीस्थविद्वन्मण्डली।

—श्रीरामाज्ञापाण्डेयः

रतसंडस्थः

## चित्र-परिचयः

वामतः उपविष्टेषु---पं० सभापतिशर्मोपाध्यायः ( प्रिं० बिरला सं० कालेज ), श्रीसुधीरकुमारघोषः ( शिक्षा-संचालक ), नैपालराज-प्रतिनिधिः, माननीयश्रीसम्पूर्णानन्दः ( चान्सलर, शिक्षा-अर्थ-श्रम-सचिव ), काशीराजो विभूतिनारायण सिंहः, डा० आई. आर. खाँ ( गवर्मेन्ट सेक्रेटरी—शिक्षा ) म. म. नारायणशास्त्री खिस्ते ( कुलपति ग. सं. कालेज ), पं० त्रिभुवन प्रसादोपाध्यायः ( प्रधान—संस्कृत पाठशाला निरीक्षक ), पं० कुबेरनाथशुक्ल ( पीठस्थविर—राजकीय संस्कृत परीक्षा )।

# चतुर्थोपाधिवितरणोत्सवः

## काशिक-राजकीय-संस्कृत-महाविद्यालयस्य

### ध्वजारोहणम्, सैनिकस्वागतञ्च

दिसम्बरस्य षोडशे दिवसे ( पौषकृष्णैकादश्यां शुक्रवासरे ) द्विवादनवेलायां समवेतेषु आदरणीयजनेषु जनोल्लाससङ्कुले महाविद्यालयस्य बहिः प्राङ्गणे पङ्क्तिसज्जेषु सैनिकजनेषु पुरतः कुसुमादिभिरर्चितायां राष्ट्र-ध्वजपीठिकायां समारूढः काशिराजो विभूतिनारायणसिंहः राष्ट्रध्वजमुदधुनोत्। ततः 'उन्नमन् भारतस्याद्य भाग्योदय' इति सैनिकवाद्ये उच्छलन्त्या ध्वजगीतिकायाः ओज उपस्थितेषु सहृदयजनेषु कञ्चिदपूर्वंराष्ट्रप्रेमाणं प्रावाहयत्। अनन्तरं श्रीमतः काशिराजस्य शिक्षामन्त्रि-श्री-सम्पूर्णानन्दमहाभागस्य च सैनिकं स्वागतं अतीव मनोहारि समभवत्।

## समावर्तन-संस्कारः

समाभवने चान्सलरमाननीयश्रीसम्पूर्णानन्दप्रमुखशिक्षाध्यक्षकुलपति–पीठस्थविर–प्राध्यापकाध्यापकानां सुसज्जा पङ्क्तिः सांस्कृतिकं सन्देशमावहन्तीव सभामण्डपं प्राविशत्। ततः सभापीठे विराजमानस्याऽध्यक्षस्य काशिराजस्य शुभाभिनन्दनं माल्य-फलादिनिवेदनम्। ततोऽध्यक्षस्यानुशासनेन कुलपतिना महामहोपाध्याय-पं० नारायणशास्त्रिखिस्तेमहोदयेन समावर्तन-पद्धत्यनुसारं संस्कारः सुसम्पादितः। अनन्तरं माननीयचान्सलरमहोदयाः पीठस्थविर पं० कुबेरनाथशुक्लेन उपस्थापितेभ्यश्चतुःषष्ट्यधिकशतत्रयाय ( ३६४ ) स्नातकेभ्यस्तत्र पञ्चाधिकैकशताय ( १०५ ) स्नातकेभ्यो विभिन्नविषये 'आचार्य' पदवीम्, ऊनषष्ट्यधिकद्विशताय ( २५९ ) स्नातकेभ्यः शास्त्रिपदवीञ्च वितीर्णवन्तः, अपिच विभिन्नपरीक्षासु विशिष्टाङ्केन उत्तीर्णतां गतेभ्यश्छात्रेभ्यः सुवर्ण-रजतादिपदकानि व्यतरन्।

## भाषणानि, चित्रोद्घाटनञ्च

संस्कारानन्तरं माननीयशिक्षामन्त्रिणां संस्कृत–संस्कृति–सेवकानभिलक्ष्यातीव संक्षिप्तं गभीरभाषणमभवत्। तच्छ्रुत्वा न केवलं स्नातकाः, अपितु अन्येऽपि समासदः विद्वांसश्चाभ्यनन्दन्। ततो माननीयकुलपतेर्विवरणात्मकभाषणम् अभूत्। अनन्तरं सभापतिकाशिराजस्य स्वपूर्वजानामिव पुरातन-परम्परा-परिपूतं भाषणमभवत्। पश्चात् काशिराजेन राजकीय-संस्कृत-महाविद्यालयस्य भूतपूर्वाध्यापकप्राध्यापकानां प्रातःस्मरणीयानां म० म० वामाचरणभट्टाचार्य-म० म० सुधाकरद्विवेदि–म० म० मुरलीधरझा–म० म० दामोदरशास्त्रिचरणानां तैलचित्राणि उद्घाटितानि।

उत्सवान्ते सरस्वतीभवने आदरणीयातिथीनां जलपानादिभिः स्वागतं सञ्जातम्।

---

चतुर्थोपाधिवितरणोत्सवे

# उपसम्मेलनानि

## वादविवादप्रतियोगितासम्मेलनम्

१२-१२-४९ दिवसे जगन्नाथोपाध्यायस्य संयोजकत्वे पण्डितप्रवर-रामाज्ञापाण्डेय-( भू० पू० अध्यापकं-पटना कालेज, बिहार ) महाशयानां सामापत्ये ज्यौतिषाचार्यपण्डित-बलदेवमिश्र—श्री अनन्तशास्त्री फड़के—स्वयं समापतिश्च इत्येतेषां त्रयाणां निर्णायकत्वे 'कार्या-कार्यविनिश्चितौ शास्त्रं बुद्धिर्वा मानम्' इति विषयमधिकृत्य संस्कृतभाषणप्रतियोगिता-सम्मेल-नमभूत् । अस्मिन् सम्मेलने पञ्चविंशत्यधिकसंस्कृतविद्यालयानां प्रतिनिधिविद्यार्थिनः पक्ष-विपक्षयोर्बभाषिरे । अत्र सम्मिलिताश्छात्राः पूर्ववर्षेभ्योऽधिकं सुस्पष्टं विषयानुरोधि तर्कपूर्णं विशेषतश्च लोक-सभा-सरणिमनुसृत्य भाषणमदुः ।

यद्यपि परम्परानुसारं पक्षद्वये सर्वोत्कृष्टत्वेन निर्णीताभ्यां छात्राभ्यामेव राजतपदकं दीयते, परञ्चास्मिन् वर्षे मध्यमकक्षीयौ द्वौ बालच्छात्रावपि एवं शुद्धं युक्तिपूर्णं सुमधुरं भाषण-मदत्ताम्, येन प्रभाविताः सदस्या अन्ये चाधिकारिणः तत्र म०म० नारायणशास्त्रिखिस्ते-महोदयाश्च पक्षद्वयेऽपि सर्वोत्कृष्टत्वेन निर्णीताय बालच्छात्रायाऽपि राजतपदकप्रदानार्थं घोषणां विहितवन्तः । तदनुसारं निम्नाङ्किताश्छात्राः विजयिनोऽभवन् ।

पक्षे—शिवशङ्करभट्टाचार्यः ( ग० सं० कालेज काशी )
सुधाकरदीक्षितः ( बालः ) ( धर्मसङ्घ-विद्यालय काशी )



विपक्षे—रामशङ्करभट्टाचार्यः ( ग० सं० कालेज काशी )
रामचन्द्रद्विवेदः ( बालः ) ( ग० सं० कालेज काशी )

## शास्त्रार्थप्रतियोगितासम्मेलनम्

१३।१२।४९ दिवसे पं० मुरलीधरमिश्र-(प्रो० ग० सं० कालेज) महोदयस्य संयोजकत्वे पं० गोपालशास्त्रीनेने-( भू० पू० प्रो० ग० सं० कालेज ) महोदयानां साभापत्ये पं० बालकृष्ण-पञ्चोली-पं० गोपालशास्त्री नेने-पं० रघुनाथशर्मणां निर्णेतृत्वे परिभाषेन्दुशेखरस्य प्रथमप्रकरणे 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषामवलम्ब्य प्रौढ्या शास्त्रार्थोऽभूत्। तत्र चन्द्रिका-प्रसादद्विवेदः ( मारवाड़ी सं० विद्यालय ) विजयं लेभे।

तदनन्तरं पं० केशवद्विवेदिनः ( ग० सं० कालेज काशी ) संयोजकत्वे पं० शिवदत्त मिश्राणां ( प्राध्यापक ग० सं० कालेज ) साभापत्ये पं० वामाचरणभट्टाचार्य-( अध्यापक हिन्दू वि० विद्यालय काशी ) पं० ज्वालाप्रसाद-पं० केशवद्विवेदमहोदयानां निर्णेतृत्वे व्यधिकरणजागदीश्यां प्रथमलक्षणे—'व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव' इति-विषयमवलम्ब्य शास्त्रार्थो जातः। तस्मिन् गदाधराचार्यः ( रामानुज सं० विद्यालय काशी ) स्वामी काशिकानन्दश्च ( ग० सं० कालेज, काशी ) विजयिनावभूताम्।

## सतीर्थ्यसम्मेलनम्

१४।१२।४९ दिवसे पं० अनन्तशास्त्रिफड़केमहोदयस्य संयोजकत्वे पं० कालीप्रसाद-मिश्राणां ( प्रिंसिपल-संस्कृतमहाविद्यालय, हिन्दू वि० वि० काशी ) साभापत्ये सतीर्थ्य-सम्मेलनं समपद्यत। अस्मिन्नधिवेशने काशीस्था बहवः प्रसिद्धिङ्गता अन्त्यस्नातकाः विद्वांसः सम्मिलिता आसन्। सर्वानुमत्या द्वौ प्रस्तावौ परिषदा स्वीकृतौ—

(१) भविष्यत्संस्कृतविश्वविद्यालयस्य कुलपतिस्तथा भवतु, यः प्राचीनप्रणाल्या गृहीत-संस्कृतविद्यो ज्ञातनवीनप्रणालीकश्च सन् प्राचीनां पद्धतिं संस्कृतिञ्च सुरक्षितां कुर्यात्।

(२) भविष्यत्संस्कृतविद्यालयेषु सर्वपदेषु ये ये कार्यकर्त्तारो योजनीयाः स्युस्ते सर्वेऽपि सुविद्वांसः, सुचरित्राः, भारतीयपद्धतेः संस्कृतेश्चोपासकाः भवेयुः।

सतीर्थ्यसम्मेलनस्य आगामिकार्यजातं सुचारु प्रचालनार्थं सम्मेलनेनैका परिषत्संस्थापिता, तस्याः पदाधिकारिणां नामानि—

अध्यक्षः—पं० कालीप्रसादमहोदयः ( प्रि० सं० महाविद्यालय, हि० वि० वि० )

मन्त्री—पं० अनन्तशास्त्रीफड़के ( ग० सं० कालेज काशी )

कोषाध्यक्षः—पं० मुरलीधरोपाध्यायः (सहायकनिरीक्षक सं० पाठशाला—उत्तरप्रदेश)

सदस्याः—म० म० नारायणशास्त्रि खिस्ते—पं० त्रिभुवनप्रसादोपाध्याय—पं० कुबेरनाथ-शुक्ल—पं० रामाज्ञापाण्डेय—पं० ताराचरणभट्टाचार्यमहोदयाः ।

---

# समितेरुद्देश्यं कार्यक्रमश्च

भारतीय-ललित-कलानामध्ययन-प्रयोग-शोध-द्वारा
समाजस्य सांस्कृतिकमुज्जीवनं समितेरुद्देश्यम् ।

एनमुद्दिश्य साम्प्रतमयं कार्यक्रमः साधयिष्यते—

१—(क) प्राचीनहस्तलिखितग्रन्थेषु पुराणेषु वैदिकतान्त्रिककर्मकाण्डेषु परम्परागतलोक-गीतिषु शिलालेखादिषु तत्र तत्र विकीर्णानां कलासामग्रीणामेकत्रसङ्ग्रहः ।

(ख) तेषां प्रकाशनञ्च ।

२—(क) छात्राणां शास्त्रीयपद्धत्या सङ्गीते रुचिवर्द्धनार्थमस्मिन् विश्वविद्यालये सङ्गीतविभा-गस्थापनायाधिकारिणां समक्षमावेदनम् ।

(ख) व्यवस्थापनाय च सहयोगः ।

३—(क) कलामधिकृत्य विदुषां निबन्धपाठः,

(ख) तेषां प्रकाशनञ्च ।

४—छात्राणां विदुषामन्येषां सहृदयसामाजिकानां कलाभिरुचीनामतिथीनाञ्चानुरञ्जनाय नाट्याभिनय-नृत्यवाद्य-गायन-काव्यपाठवादिप्रदर्शनाय च दीक्षान्तसमारोहावसरेऽ-धिवेशनव्यवस्था ।



---

# ललित-कला-सम्मेलनम्

तत्र

## प्रथमदिनस्य कार्यविवरणम्

नियतसमये ( १५ दिसम्बरस्य सायं ५½ वादने ) तत्र भवान् काशिराजो, माननीय-शिक्षासचिवः, प्रान्तीयशिक्षासञ्चालकः, शिक्षानिरीक्षकादयोऽधिकारिणः, सभ्याः, पत्रप्रतिनिधयः, कलाविदो नागरिकाः, काव्यमर्मज्ञाः संस्कृतविद्वांसः सभास्थानमलङ्कुर्वन्। विशालरङ्गमञ्चस्य वाम-दक्षिणदिग्वर्ति-नटराजशिव-हंसारूढसरस्वत्योश्च मञ्जुलकांस्यमूर्ती, भवनस्य चतुर्दिशि शिवसंहारलास्यस्य-अमृतप्रस्राविण्याः वीणापणिशारदायाः शान्तिमुद्रयोर्बुद्ध-गान्धिनोश्च कला-कार-काँजीलाल-विलेखितचित्राणि काञ्चिदपूर्वां शान्तिं श्रद्धाञ्च वितरन्त्यासन्। अतएव केवलं पञ्चाशत्सदस्यानामेवोपवेशार्हेऽभिनयभवने सम्भवतोऽष्टशत्यां सदस्येषु समासीदत्स्वपि शान्तिर्नैषद् विचलिता।

तस्मिन् हर्षनिर्भरापूर्णे सामागीयत माङ्गलिकम्। तदनु माननीय डा० सम्पूर्णानन्द-महोदयाः सम्मेलनमुद्घाटयन्तोऽभापन्त।

### उद्घाटन-भाषणम्

पारतन्त्र्ययुगेऽस्माभिः संस्कृतिसम्बन्धीनि बहूनि तत्त्वानि विस्मृतानि। कस्मिंश्चिदंशे शास्त्रीयं ज्ञानं कथञ्चिद्रक्षितम्। परञ्च प्राचीनकला नाशमेवेयाय। अत्यन्तावश्यकः खलु तदु-द्धारः। रसनिष्पत्तिः काव्यद्वारेति मन्यते, परं सा न केवलं काव्यादेव, अपितु चित्र-मूर्त्ति-संङ्गी-तेभ्योऽपि। संङ्गीतं हि सर्वोत्तमा कला। प्रयुक्तकेवलस्वरं सङ्गीतं सर्वोत्तमम्। कामं न रोचतां कस्मैचित् किमपि चित्रं दृश्यं वा परं संङ्गीतं समं प्रभावयति सर्वेषां मनांसि। वाद्यं सङ्गीतस्या-वश्यकमङ्गम्। दौर्भाग्याद्यवाद्यकलाप्रेमिणः समाजे सम्मानपूर्णदशा नावलोक्यन्ते, नैतदुचितम्।

## लोक-नृत्यम्

तदनु नृत्यनिर्देशकः श्रीनिर्मलकुमारवन्द्योपाध्यायः स्वागतनृत्यमनृत्यत्, ततश्चाष्टौ नर्तका लोकनृत्यम्। आदिवासिनां सफलप्रतिकृत्येदं 'वृत्तचारि' नृत्यं सामाजिकानामतीव सन्तोषायामवत्। ततः राजकुमारदानीसिंहो मणिपुरीयनाम-गन्धर्वनृत्ये प्रादर्शयत्। नृत्यस्य सर्वाण्यप्यायोजनानि कलापूर्णान्यासन्, तत्रापि पुरातन-संस्कृतिसमुपासकानां संस्कृताध्येतॄणां कलाक्षेत्रे पुनरिदं मार्गप्रदर्शनमवलोक्य सामाजिका भूरिशोऽभ्यनन्दन्।

## सङ्गीतम्

सङ्गीतान्यपि शास्त्रीयपद्धत्या संस्कृतमाध्यमेनैवागीयन्त। गीतानि प्रायश आधुनिककविना श्रीमञ्जुनाथेन रचितान्यासन्। मधुरभावतदुचितशब्दविन्यासेन शास्त्रीयस्वरप्रणाल्या च विकसिता गीतिः श्रोतॄणां मनांसि आहरत्, तत्र द्वित्राणि तु—विरहापगा तटमुत्तरं पुनरागमिष्यति वा न वा, सन्ततं सन्तापितानां हीयते रजनी नु किम्—समधिकप्रभावोत्पादकान्यमन्यन्त।

## कवीनामवतरणम्

वाल्मीकि-कालीदासा-श्वघोष-भारवि-दण्डि-बाणप्रमुखानां कालानुसारमवतरणं प्रादर्शि। पूर्वरङ्गं प्रविविक्षोः कवेः परिचयः पद्यैर्दीयते स्म। तदनु च तदुचितवेशधारी कविः प्रविश्य स्वरचनायाः कञ्चिदंशं पठति स्म। अर्वाचीनकविः श्रीगङ्गाधरशास्त्री अपीहावातार्यत। एषु आदिकवेर्वाल्मीकेः 'मा निषाद प्रतिष्ठां त्व' मित्यनुरोधि दृश्यं करुणा-रौद्रयोरपूर्वभावमुपास्थापयत्। कालिदासस्य कवितास्वरः बाणभूमिकायामवतीर्णस्य गद्योच्चारणप्रकारश्च सर्वेभ्योऽरोचेताम्।

## मातङ्गदिवाकर-दृश्यम्

अन्ते च 'मातङ्गदिवाकर' इति नामकमेकाङ्कि दृश्यमभिनीतम्। इदं दर्शकेभ्यो विशेषतोऽरोचत। सम्राजो हर्षवर्द्धनस्य बाण-मयूर-ह्वेनसाङ्गप्रभृतिभिः सुशोभितायां राजसभायां मातङ्गजातीय एको दिवाकराभिधो दाक्षिणात्यः प्रविविक्षति। सम्राट् तं प्रवेशयितुमादिशति

रक्षकान् । आगम्य स स्वकीयाभिनय-काव्यपीयूषधारया सर्वां सभामाह्लादयति । प्रसन्नः सम्राट् कविभिरभ्यनुज्ञातो मातङ्गजातीयायापि तस्मै बाणमयूराभ्यां द्विजाभ्यां समभासनं ददाति । एतेन मध्ययुगस्य जात्यादिनिरपेक्षगुणग्राहकता परिचीयते ।

समयस्याधिकव्यतिपातात् शिक्षासचिवानामादेशेन कविसम्मेलने स्थगिते घोषिते सभ्या आगामिदिवसस्य कार्यक्रमं दिदृक्षया सदसो न्यवर्तन्त ।

---

# ललित-कला-सम्मेलनम्

तत्र

## द्वितीयदिनस्य विवरणम्

पूर्वकार्यक्रमाकृष्टाः कलाविदो जनाः नवोत्साहेन नियतसमयतो बहुपूर्वमेव समवेता अभवन्। सर्वप्रथमं 'हे मदनान्तक ! पुरहर ! शम्भो ! भवभयनाशन ! विश्वविभो' ! इति नान्यगीयत । ततः महाकविभासविनिर्मितं 'दूतवाक्यम्' अभिनीतम् । तथाहि—पाण्डवानां समूलोन्मूलनाय कृतनिश्चयो दुर्योधनः कः सेनापतिरस्माकं बलस्य भवेदिति विमृशन् भीष्मद्रोणप्रमुखैः मन्त्रशालायामुपविशति । तदैव सम्भावितं युद्धं भूयोऽप्युपशमयितुं पाण्डवाग्रजानुरोधेन प्रेषितः श्रीकृष्ण आगम्य शान्तिसन्धिं प्रस्तौति, परञ्च दुर्जनो हितं क्व शृणोति ? दुर्योधनः सन्धिप्रस्तावमेव न केवलमस्वीकृतवान्, किन्तु शान्तिदूतं श्रीकृष्णं कटूक्तीः समुल्लपन् तं सदानितुं सहचरानादिशत्, तदा स भगवान् विश्वरूपं समास्थाय सर्वानस्तम्भयत्, सकुशलश्च ततः प्रत्यावर्तत । अभिनेतृषु श्रीकृष्णदुर्योधनौ मुख्यावास्ताम्, तौ स्वभूमिकां सफलमवातारयेताम् । दृश्यस्यान्तिमो भागः—यत्र कृष्णं बन्द्धुं तस्यानन्ता आकृतीरपि ग्रहीतुं दुर्योधनो यतते, न च साफल्यं लभते—सामाजिकानतीव प्राभावयत् ।

अभिनयान्ते नेपथ्यात् श्रीकृष्णसंस्तुतिपरा मधुरतरा गीतिः आकर्ण्यत ।

एतदनु सहृदयहृदयोल्लासिलास्यः पूर्वदिनपरिचितो राजकुमारदानीसिंहः स्वीयां नृत्यकलां प्रादर्शयत् ।

तदनु च मासेनैव विनिर्मितं द्वितीयमेकाङ्कि अभिनेतुं प्रास्तूयत 'ऊरु-भङ्गं'त्यभिधम् । प्रथमं भीम-दुर्योधनयोर्गदायुद्धस्य भयङ्करतां त्रयो भटा वर्णयन्ति । भीमगदाप्रहारतो मर्मण्याहतो
७४ दुर्योधनः पृथिव्यां पतति । निजशिष्यस्येदशमवसानमवलोक्य बलदेवः क्रुद्ध्यति । श्रुतदुर्योधनपराभवास्समन्वेषयन्तस्तत्पत्नीपुत्रमातापितर आगच्छन्ति। दुर्योधनस्तान् 'अपराङ्मुखोऽहं युधि हत'

इति क्षत्रियोचितमाचरति मयि गर्वमावहन्तु शुचञ्च त्यजन्तु भवन्त इति सान्त्वयति। एत-र्ह्येवाश्वत्थामाऽपि प्रतिकारभावनामयरौद्रवेष आयाति। स दुर्योधनात्मजं दुर्जयं 'विनाऽभिषेकं राजा त्वं विप्रोक्तैर्वचनैर्मम'इति राज्येऽभिषिञ्चति। एतेन कथञ्चिल्लब्धशान्तिर्दुर्योधनः प्राणांस्त्यजति।

अस्मिन्नाटके आदितः समाप्त्यन्तं करुणालहर्यः प्रवहन्ति। एकादशाक्षौहिणीपतेः सम्राजो दुर्योधनस्य पश्चात्तापः धृतराष्ट्र-गान्धारी-दुर्जय-भानुमती-विलापश्च कं न नाम द्रावयति सहृदयम्!! दुर्योधनस्य भूमिकायां स्वयं निर्देशको भट्टाचार्य एवासीदवतीर्णः, तेन स्वयं मूर्तिमती करुणैवाऽऽविरभवत्। तत्र गान्धार्याः पुत्रवियोगाभिनयभूमिकायां श्रीभारतसिंहः अतीव कारुणिकं दृश्यमुपस्थापितवान्। दुर्जयभूमिकायामवतीर्णः सप्तवर्षीयो बालः स्वबालवाण्या सर्वानत्यशेत।

अभिनयान्तमनु 'क्व नु ननु गतिरागतिरिह' इति यथाभिनेयभावा गीतिः सभ्येभ्यो जीवनरहस्यविचारावसरमिवाददात्।

## पुरस्कार-घोषणा

एतदनन्तरं जगन्नाथोपाध्यायः ललितकला-समितेरुद्देश्यं कार्यविवरणं च संक्षेपेणोप स्थापयन् तत्रागतार्थिक-सामाजिक-बाधा निवारयितुं अधिकारिणां समक्षं न्यवेदयत, अपि च ललितकलासमितेर्विविधाधिकारिणां कार्यकर्तॄणामभिनेतॄणां नृत्यकाराणां च परिचयं दत्तवान्।

ततो माननीयशिक्षासचिवाः श्रीसम्पूर्णानन्दमहोदया दुर्योधन-श्रीकृष्णपात्राभिनेतारौ
श्रीविभूतिभूषणभट्टाचार्य-श्रीभगवतीप्रसादपण्ड्यामहोदयौ,
दुर्जयाभिनेतारं दिलीपकुमारं श्री आई. आर. खां. महाशयः,
मातङ्गदिवाकराभिनेतारं श्रीरसिकविहारिणं श्रीकेदारनाथसारस्वतः,
संस्कृतगीतिगायकं श्रीमहेशकुमारं श्रीसुधीरकुमारघोषमहोदयश्च पुरस्कृतवान् कर्तुं घोषणामकुर्वन्।

## शिक्षासचिवानाम् आश्वासनम्

एतदनन्तरं मा० श्री सम्पूर्णानन्दमहोदया अभाषन्त—

मया पूर्वमेवानेकश उक्तं यद् राजकीय-संस्कृत-महाविद्यालयस्य विद्यार्थिन उत्तरोत्तरं उन्नतिशीला भवन्तो दृश्यन्ते। अत्यन्तं हर्षस्यायं विषयो यद् अस्य महाविद्यालयस्य विद्यार्थिनः कलाक्षेत्रेऽपि आशाजनिकां प्रगतिं कुर्वन्ति। विशेषतो नृत्यादिकलामधिकृत्य समाजे दोषग्रस्ता भावनाः प्रचलिताः सन्ति। नैतदुचितम्, एवंविधैः स्वरुचिः परिष्करणीया। ललितकलासमितेर्बाधामहम् अनुभवामि। समितौ स्थायित्वं दातुम् अहम्, काशीराजः, एं. आर खांमहोदयः, डाइरेक्टरघोषमहोदयश्च शीघ्रं विचारयामः॥

अन्ते च ललितकलासमितेरध्यक्षा म० म० नारायणशास्त्रिखिस्तेमहोदयाः समागतेभ्यो धन्यवादान् वितरन्तः सम्मेलनं विसस्रुजुः।

---

## सैनिकाः

अस्मिन् वर्षे सैनिकेषु पूर्ववर्षेभ्योऽधिका प्रगतिर्जाता। द्वेऽपि मण्डले पञ्चत्रिंशत् (३५) सैनिका आसन्। एवं सप्तति (७०) छात्रसैनिकाः चतुर्थवितरणोत्सवे सैनिक-स्वागतं विहितवन्तः।

प्रधाननायकः—

श्रीभगवतीप्रसाद त्रिपाठी।

उपनायकः (१ मण्डलस्य)—

श्रीईश्वरदत्त द्विवेदः।

उपनायकः (२ मण्डलस्य)—

श्रीकेशवप्रसाद द्विवेदः।

---

# ललितकलासम्मेलनस्य सहयोगिनः

समितेरध्यक्षः—

**म. म. नारायणशास्त्री खिस्ते**

व्यवस्थापकौ—

श्रीजगन्नाथ उपाध्यायः

श्रीव्रजवल्लभद्विवेदः

संयोजकौ—

श्रीप्रभातकुमार पाण्डेयः

श्रीशुकदेवव्यासः

निर्देशकौ—

दृश्याभिनययोः—श्रीविभूतिभूषणभट्टाचार्यः

नृत्यसङ्गीतयोः—श्रीनिर्मलकुमारवन्द्योपाध्यायः

लोकनृत्यकाराः—

श्रीभगवतीप्रसादपण्ड्या

श्रीराजदेव मिश्रः

श्रीपद्मनाथशुक्लः

श्रीगिरजाशङ्करोपाध्यायः

श्रीप्रभातकुमारः

श्रीरामधनी सिंहः

श्रीद्वारिकाप्रसाद मिश्रः

श्रीकमलेश्वरदयालशर्मा

स्वागतनृत्यकारः—

श्रीनिर्मलकुमारवन्द्योपाध्यायः

नाग-गन्धर्व-असिनृत्यकारः—

राजकुमारदानीसिंहः ।

महाकवीनां भूमिकासु—

श्रीप्रभातकुमारः—वाल्मीकेः

श्रीजगदीशप्रसादभार्गवः-अश्वघोषस्य

श्रीमहेशकुमारशुक्लः कालीदासस्य

श्रीराजदेवमिश्रः—भारवेः

श्रीभगवतीप्रसादत्रिपाठी-दण्डिनः

श्रीभगवतीप्रसादपण्ड्या-बाणस्य

श्रीरामभजनपाण्डेयः गङ्गाधर-शास्त्रिणः

गायकाः—

श्रीमहेशकुमारशुक्लः

श्रीप्रभातकुमारपाण्डेयः

श्रीजगदीशप्रसादभार्गवः

श्रीलक्ष्मीदत्तचतुर्वेदः

मातङ्गदिवाकरदृश्याभिनेतारः—

श्रीभगवतीप्रसादत्रिपाठी—हर्षवर्द्धनस्य

श्रीभगवतीप्रसादपण्ड्या—बाणस्य

श्रीराजदेवमिश्रः—महामात्यस्य

श्रीआद्याशङ्करपाण्डेयः—धावकस्य

श्रीतुल्यचन्द्रशर्मा—ह्वेन्सांगस्य

श्रीरसिकविहारीजोशी—दिवाकरस्य

दूतवाक्याभिनये—

श्रीप्रभातकुमारः—दुर्योधनस्य

श्रीभगवतीप्रसादपण्ड्या—श्रीकृष्णस्य

श्रीसत्येन्द्रवर्मा—सूत्रधारस्य

श्रीसुरेन्द्रवर्मा—धृतराष्ट्रस्य

श्रीरामधनी सिंहः—काञ्चुकीयस्य

ऊरुभङ्गे—

श्रीसत्येन्द्रवर्मा—सूत्रधारस्य

श्रीजगदीशप्रसाद भार्गवः
श्रीरामशङ्करत्रिपाठी
श्रीराजदेवसिंहः } भटानाम्

श्रीप्रभातकुमारः—बलरामस्य

श्रीविभूतिभूषणभट्टाचार्यः—दुर्योधनस्य

श्रीतारकनाथभट्टाचार्यः—धृतराष्ट्रस्य

श्रीभारतसिंहः—गान्धार्याः

श्रीदिलीपकुमारः—दुर्जयस्य

श्रीभगवतीप्रसादपण्ड्या—अश्वत्थाम्नः

श्रीराधाकृष्णः—दुर्योधनपत्न्याः

कार्यकर्त्तारः—

श्रीश्यामसिंह त्यागी

श्रीसूर्यप्रसादपुरोहितः

श्रीवामदेवपण्ड्याः

श्रीस्वामीजी

श्रीज्वालाप्रसादः

सहायकाः—

श्रीअलखनिरञ्जनपाण्डेयः

श्रीशङ्करदयालपाण्डेयः

श्रीमधुसूदनपाण्डेयः

# चतुर्थसमावर्तनोत्सवे-

# प्रदत्तपदक-पुरस्कार-विवरणम्

| पुरस्कारविजेतृनाम | पुरस्कारनाम | निमित्तम् | पुरस्कारप्रदातृनाम |
|---|---|---|---|
| १ श्रीस्वामिरामेश्वरदेवः | आनन्दीप्रसादमुखोपाध्यायस्वर्णपदकम् | शाङ्करवेदान्ततृतीयखण्डे सर्वप्राथम्येनोत्तीर्णता | |
| २ श्रीविधिराजपाण्डेयः | गङ्गामोतीदेवीस्वर्णपदकम् , | धर्मशास्त्राचार्यतृतीयखण्डे सर्वप्राथम्येनोत्तीर्णता | |
| ३ श्रीचन्द्रभानुपाण्डेयः | सवाईमाधोरजतपदकम् , | आचार्यतृतीयखण्डे-सर्वप्राथम्येनोत्तीर्णता | |
| ४ ,, ,, ,, | रिपनग्रासलेटस्वर्णपदकम् | ,, ,, | |
| ५ श्रीगजाननमुसलगाँवकरः | स्वर्णपदकम् | | मध्यभारतशिक्षाविभागः |
| ६ श्रीपीयूषराजपाण्डेयः | स्वर्णपदकम् | साहित्यशास्त्रिपरीक्षायां सर्वप्राथम्येनोत्तीर्णता | पं० रामप्रतापशास्त्री भू० पू० सं० विभागाध्यक्ष नागपूर वि० |
| ७ श्रीरसिकविहारीजोशी | स्वर्णपदकम् | साहित्यशास्त्रिद्वितीयखण्डे प्राथम्येनोत्तीर्णता | वि०के०एल०माथुरः, प्रि० ग० इ० का०, अजमेरः |
| ८ श्रीभगवतीप्रसाद पण्ड्या | स्वर्णपदकम् | व्याकरणाचार्यपरीक्षायां सर्वप्राथम्येनोत्तीर्णता | म० म० नारायणशास्त्री खिस्ते. |

| पुरस्कारविजेतृनाम | पुरस्कारनाम | निमित्तम् | पुरस्कारप्रदातृनाम |
|---|---|---|---|
| ९. श्री रामसुरेशत्रिपाठी | शतं रूप्यकाणि | कालमधिकृत्यलेखे सर्वप्राथम्याप्तिः | प्रि. ग. सं. कॉ. उत्तरप्रदेशसरकारः |
| १० श्रीप्रभातकुमारपाण्डेयः | रजतपदकम् | दूतघटोत्कचनाटके दुर्योधनस्य सफलाभिनयः | मा० सम्पूर्णानन्दः |
| ११ श्रीभगवतीप्रसादपण्ड्या | ,, ,, | कर्णभारनाटके कर्णस्य सफलाभिनयः | ,, ,, ,, |
| १२ श्रीविभूतिभूषणभट्टाचार्यः | ,, ,, | मृच्छकटिकीयशर्विलकाङ्के शर्विलकस्य सफलाभिनयः | ,, ,, ,, |
| १३ श्रीतारकनाथभट्टाचार्यः | ,, ,, | धृतराष्ट्रस्य सफलाभिनयः | म० म० नारायण शास्त्री खिस्ते |

## चतुर्थोपाधिवितरणोत्सवे

# प्राप्त-शुभ-कामनाः

अस्मिन्नवसरे विशेषतो निम्नलिखितमहोदयैः स्वशुभ-कामनाः प्रेषिताः—

राष्ट्रपति डॉ० राजेन्द्रप्रसादः श्रीमती राजकुमारीअमृतकौरः-( स्वास्थ्यमन्त्रिणी, भारतसरकार ) पं० कैलाशनाथकाटजूः ( राज्यपाल बंगाल ) एम. एस. अणे ( राज्यपाल, विहार ) एच. बी. मोदी ( राज्यपाल उत्तरप्रदेश ) श्रीश्रीप्रकाश ( राज्यपाल आसाम ) सर सीताराम ( भारत के पाकिस्तानस्थित हाई कमिश्नर ) एस. सी सत्तन ( इंडिया आफिस लाइब्रेरी ) सर सर्वपल्ली राधाकृष्णन्-(भारतके मास्कोस्थित राजदूत) डॉ० विटूरपिसानी (मिलानो-युनिव०, इटली ) पी. एस. वरेल ( लीड्स ) आर. एल. टर्नर ( डॉयरेक्टर, लन्दन युनिव. ) प्रो. डॉ. पी. बहल ( काबुल युनिव. ) सर्वश्री थामस् ( वैनबरी ), बी हेमम् ( अध्यक्ष, संस्कृतिविभाग, सीलोन युनिवर्सिटी ), आचार्य नरेन्द्रदेव ( वा. चां. लखनऊ युनि. ) के. एल. दुबे ( वाइसचांसलर, नागपुर युनिव. ) स्व. डॉ. सच्चिदानन्द सिंह ( वाइसचांसलर पटना युनिव. ) सी. एम. आचार्य ( वाइसचांसलर उत्कल युनिव. ) डी. आर. भट्टाचार्य ( वा. चां., प्रयाग युनिव. ), एन. पी. अस्थाना ( वा. चां. आगरा युनिव. ) आर. एन. दांडेकर ( भंडारकर रिसर्च इन्स्टीट्यूट, पूना ) पी. के. आचार्य ( इलाहाबाद युनिव. ) नरदेव-शास्त्री ( ज्वालापुर महाविद्यालय ) पं. अमरनाथ झा ( चेयरमेन, पब्लिकसर्विसकमीशन, उत्तरप्रदेश ) पी. के. गोडे ( भंडारकर रिसर्च इन्स्टी. ) बी ए. रामस्वामीशास्त्री ( त्रिवेन्द्र-युनिव. ) के. स्वामीराव ( बम्बई ). केशवदेवमालवीय ( विकासमंत्री, उत्तरप्रदेश ), अ. शा. घाणेकर ( लश्कर ) श्रीरामरतनगुप्त ( कानपुर ), डॉ. प्रा. रा. दिवेकर ( ग्वालियर ) मथुरानाथशास्त्री ( जयपुर ), गिरिधरशर्मा चतुर्वेदी ( जयपुर ) इत्यादयः। ८१

एषु केषाञ्चित् सन्देशानामंशा दीयन्ते—

११

काशीस्थ गवर्नमेण्ट संस्कृत कालेजका भारतीय शिक्षण संस्थाओंमें एक विशिष्ट स्थान है। इसीका यह सौभाग्य रहा है कि इसे काशीके बड़े-बड़े मनीषी विद्वानोंका सहयोग मिला है। चिरस्मरणीय श्री बाल शास्त्री, श्री बापूदेव शास्त्री एवं पं० सुधाकर द्विवेदी जैसे प्रकाण्ड पण्डितों-की इसे सेवायें प्राप्त रही हैं। इन मनीषी आचार्योंके अनुरूप ही इसे योग्य और तपस्वी तथा उच्चकोटिके प्रधान प्राप्त हैं। इसने बड़े-बड़े विद्वान् प्राप्त किये। पहले और कहीं शास्त्रोंके लिये डिग्री कालेज न थे। सुतरां यही एक कालेज था जिसे अखिल भारतीय महत्त्व प्राप्त था। इसके स्नातक बड़ी आदरकी दृष्टिसे देखे जाते थे और वे अपने विषयोंमें अधिकारी समझे जाते थे। मुझे हर्ष है कि इसकी यह परम्परा आजतक कायम है। समय बड़ी शीघ्रतासे बदल रहा है।

आशा है, इस परिवर्तित युगके अनुसार यहाँके वर्तमान आचार्य, इस संस्थाकी परम्पराको कायम रखेंगे और यहाँके स्नातक देश और विश्व के लिये अपनेको लाभप्रद सिद्ध करेंगे।

राजेन्द्र प्रसाद

मेरी हार्दिक अभिलाषा है कि नई स्वराज्य व्यवस्था में समाज के सङ्घटन और समाज के पथ-प्रदर्शन में आपका विद्यालय समुचित रूप से भाग ले और पुरातन संस्कृति एवं वर्तमान विज्ञान का सुन्दर समन्वय कर संसार के सामने व्यवहार्य रूप से सुन्दर आदर्श उपस्थित करे। × × × मुझे हर्ष है कि शीघ्र ही यह विद्यालय विश्वविद्यालय का रूप लेगा और अवश्य ही उसके द्वारा हमारी चिरकाल से दबी हुई आकांक्षायें और अभिलाषायें कार्य के रूप में परिणत हो सकेंगी। मेरी शुभ कामना है कि सब कृत्य सानन्द और सफलतापूर्वक सम्पन्न हों, विद्यालय की उपयोगिता दिन प्रतिदिन बढ़ती जाय। हमारे नवयुवक उससे समुचित लाभ उठावें और उसके द्वारा हमारे विद्वानों को अपनी विभूति को प्रकाशित और प्रसारित करने में उपयुक्त सहायता मिले।

श्रीप्रकाश

गवर्नर आसाम।

Establishment of a sanskrit university at Banaras would give an inspiration, in my opinion, to all the sister governments in India to follow its example, and in a short time we would have a number of sanskrit universities working side by side for the revival of ancient Indian learning and Indian culture.........the history of the work done by the sanskrit college is a record of service of which the members of the institution and its organisers should legitimately feel proud,

Aney

Governor of Bihar

The sanskrit college justifiably occupies a high position in the sanskrit world and now that sanskrit is coming into its own place in this ancient land, I think the college can look forward to a career of still greater usefulness in the spread of knowledge of our ancient language and culture. I wish the convocation all success.

K. N. Katju

Governor of West Bengal

We pray that your college may turn into a full fledged sanskrit university at no distant future so that sanskrit studies may be perpetuated in india with honour and dignity which these studies so richly deserve.

Director

Oriental Institute Baroda.

I am confident that the college will do its best and further increase its usefulness in "Swatantra Bharat."

Sitaram

High Commissioner For India

I hope that the Sanskrit College at Banaras will Continue to prosper and Contribute to the Preservation of the rich cultural heritage of your country.

Vicechancellor,

University of Delhi.

There is no denying that Sanskrit has a glorious future in the present set of things and will soon come to its own place not only in her home but also abroad.

D. R. Bhattacharya

Vicechancellor, University of Allahabad.

Your college has a long and distinguished history and its contribution to the cause of sanskrit scholarship in this country has been of inestimable value..................I look forward to the day when it will be possible to establish a sanskrit university in our holy town of Banaras. Any thing that I can do to help your college and the cause of sanskrit scholarship will be a pleasure to me, and I shall consider myself very happy if I can be of any service to you.

S Sinha

Late Vice Chancellor, Patna University

The work of the sanskrit college for the revival and spread of sanskrit learning throughout northern India is well known and its contribution to sanskrit will always occupy a place of honour in the history of culture in modern India.

For making a worthy use of the gift of science made to india by the west, we require more—and not less—of sanskrit learning. And in this task, I am sure that the sanskrit college—will soon develop into a sanskrit university will have a most valuable contribution to make. I wish the college a most brilliant future.

K. L. Dube

V. C. Utkal University.

In India where the earlier knowledge is still potent in common life, the interest is also practical. In Banaras the Sanskrit University will be further secured from isolation by intercourse with the modern and general university grandly installed in the same ancient city.

F. W. Thomas

Limen ( England )

The sanskrit college had already become an institution of university standing by the conferment of its degrees and titles on successful students in its examinations. I am therefore interested to hear of the intention of Govt. to give the college university status.

P. S. Burrell

Leeds.

I would love to come myself, if opportunity given to contribute my own share of learning of traditional sanskrit and of western and eastern modern methods to which both I have devoted my life, I wish you all success.

B. Heimam

Ceylon.

The Royal Afghan Ministry of Education of Afghanistan have established a chair of Sanskrit and Indo-Aryan phylology and made these subjects Compulsory at the University standard at the literature faculty. ...... I do hope that free India would follow the Afghan example and in one course would think to legislate to adopt Sanskrit as compulsory subject in the Indian Universities ... I wish the Convocation a grand Success

Parmanand Bahl

Kabul University.

Our department of India, Pakistan and ceylon is well acquainted with the great contribution which the college through out its long and distinguished history has made to sanskrit learning.......... Good wishes for the continued welfare of the college.

R. L. Turner

London.

I am glad however to take this opportunity of sending to the college, on behalf of the India office libray, my congratulations on the achievements of the college in the teaching of sanskrit and in Sanskrit research, and my sincere good wishes for the future.

S. C. Sutton

London

I desire to express to the government sanskrit college and to yourself my best wishes for your patriotic and scientifical enterprise.

Vittore Pisani

Italy

It would have been a matter of great pleasuer for me to join the function............I wish all success to the function.

C. M. Acharya,

Cuttack.

We students of sanskrit and allied subjects, have always looked for inspiration to this renowned centre of sanskrit learning and culture.............I beg to send you on behalf of this Institute and on my own behalf my greetings and very best wishes for a long and fruitful career for the college.

R N Dandekar

POONA

The wide range of the activities of the institution such as the reguler teaching for and conduct of oriental titles examinations, the training of usnskrit teachers, researches on indologicol subjects and the publication of ancient manuscripts and of a quarterly journal and the fact that numerous sanskrit schools and colleges are affiliated to it, make it virtually a sanskrit university, and it is bat proper on the part of our popular government to officially recogonise it to be so.

I wish the function every success.

V. A. Ramaswami Shastri M. A.
Travancore

भारतवर्षस्य प्राचीनां पद्धतिमवलंब्य भगवत्याः सुरभारत्याः समग्रेऽपि देशे राहुग्रासादुन्मोचितायाः चन्द्रकलाया इव प्रचाराय प्रयत्नमातन्वतां भवतां कार्यभारस्योत्तरोत्तरमभिवृद्धिं साफल्यञ्चाशासे ।

रामस्वामिशास्त्री
( ओरियन्टलइंस्टिट्यूट, बड़ौदा )

विद्याऽभिविद्योतिनि भारतेऽस्मिन्
गोपायतीयं सुरभारतीयम् ।
चिराद्विराजन्तममुं प्रकर्षं
काशी प्रकाशीकुरुतादतन्द्रम् ॥

भट्टश्रीमथुरानाथशास्त्री
( संस्कृतसाहित्य सदन, जयपुर )

श्रीमन्तः—

तत्रत्योपाधिवितरणोत्सवनिमन्त्रणं प्राप्तम् । कृतज्ञोऽस्मि । ......... तत्रावसरे ललितकलासम्मेलनस्यापि प्रवेश इति भृशं प्रमोदामहे । सर्वमेव शोभनं सम्पत्स्यते इत्याशास्महे ।

नरदेवशास्त्री, वेदतीर्थः
( आचार्य, ज्वालापुर विद्यालय )

# चतुर्थसमावर्त्तनसंस्कारसमारोहावसरे

## माननीय डा० श्री सम्पूर्णानन्दमहाभागानां

# दीक्षान्तभाषणम्

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः, माध्वीर्नः सन्त्वोषधीः,
मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः, मधु द्यौरस्तु नः पिता
मधुमान् नो वनस्पतिर्मधुमानस्तु सूर्यः, माध्वीर्गावो भवन्तु नः
तत्र भवन्, काशिराज, समवेता विद्वांसः, स्नातकाः, समवेताश्च विद्यारसिकाः !

सत्स्वपि बहुषु विद्वत्सु न जाने कथमहमाचार्य्य-श्रीखिस्तेमहोदयैः दीक्षान्तभाषणं दातुं वृतः। भवतु तत्र किमपि कारणं परन्तु भाषाभावसम्बन्धि यद् यदसाधु मया उच्यते तद् वर्धयितव्योऽल्पश्रुतस्योत्साहः श्रोतव्यानि च तस्याऽपि वचांसीति न्यायेन भवद्भिः क्षन्तव्यम् एव।

संस्कृतम् सर्वासाम् भाषाणाम्मातृस्थानीयं यदन्यत्र भाषासु गुम्फितं वाङ्मयं दृश्यते तत्सर्वं संस्कृतवाङ्मयस्यैवोच्छिष्टम्, यन्नेहास्ति न तत् क्वचिदिति नेयं वार्ता मह्यं रोचते। पारतन्त्र्यकाले तुषारहतायामपि भारतीयप्रतिभायाम् नहि भगवती वीणापाणिः किंकर्तव्यविमूढा इवातिष्ठत्। तस्याः प्रसादादभारतीयैरपि विद्वद्भिः प्रभूता ज्ञानसामग्री सम्पादिता ! तत्सर्वं विनीतभावेन अस्माभिः सङ्ग्राह्यम्। नहि कोऽपि दिक्कालादिरूपाभी रज्जुभिः सत्यं बन्धुं समर्थः। ये विदेशीयमिदमिति सत्यं तिरस्कुर्वन्ति ते महातमोमये अविद्यारूपिणि गर्ते पतिष्यन्ति एव। अस्माकम् पूर्वजाः परमज्ञानिनस्त्रिकालदर्शिनः साक्षात्कृतधर्म्माणः आसन् परन्तु तेषाम् गुणगाथारटनेन नह्यस्मासु तेषां गुणानां लवोऽप्यवतरिष्यति। ज्ञानं तु तपसा दीर्घकालनैरन्तर्य्यसत्कारसेवितेनाभ्यासेन दृढभूमित्वं गच्छति।

न हि परोपज्ञातशास्त्राभ्यासाद्विरक्तिः पूर्वेषामभिमतम्। सति विरागे कथं श्रीमच्छङ्कराचार्य्यादय आचार्य्या बौद्धार्हतचार्वाकादीनि शास्त्राणि अध्यैरन्? अनधीतप्रतिपक्षशास्त्रः कथं कोऽपि जगतो भ्रान्तमतप्रसारितध्वान्तमपनेतुं शक्नुयात्? लोककल्याणकामैर्विद्वद्भिः अवश्यम् अन्यमतावलम्बिनः प्रस्थानग्रन्थाः पठितव्याः। विज्ञानं तु साम्प्रदायिकविचारान् प्रति ताटस्थ्यं भजते।

आस्माकीनैर्योगिभिर्ये दार्शनिकसिद्धान्ताः प्रतिपादिताः तपस्विभिर्विज्ञानविशारदैश्च यानि तत्त्वानि प्रतिष्ठापितानि तेषां यत्किंचिद् ज्ञानं मया सम्पादितं तदाश्रित्य दृढं वक्तुं समुत्सहे यद्दर्शनस्य, विशेषतः सांख्यमताद्वैतवादयोः, विज्ञानसमो नान्य आधारो विद्यते। सर्वेषाम् विज्ञानभेदानां गणितं चूडामणिः। तत्पण्डिताः यस्यां ज्ञानभूमिकायां विहरन्ति सा महाभूतपञ्चास्पृष्टा दिङ्मूर्ध्नि संस्था परमसूक्ष्मा कैश्चिदेव महाप्राज्ञैः कल्पनीया। योगिनां तु अन्या कथा। न ते शास्त्रज्ञानमपेक्षन्ते। परन्तु तान् विहाय नान्यः कोऽपि अनधीतविज्ञानो दार्शनिकोऽहम् इति वक्तुमधिकारी इति मम निश्चितम् मतम्। विज्ञानेन योगानुभूतिमीमांसायै अपि साहाय्यं प्राप्यते। विज्ञानाभिज्ञानाभावादेव प्राणः समीरणभेदः सुषुम्णानाम्नी काचिद् नलिकामधिरोहतीति मृद्वभ्यासिभिर्जल्प्यते पण्डितम्मन्यैरनभ्यस्तयोगैः दुर्भाग्यग्रस्तेभ्यः शिष्येभ्य उपदिश्यते च। कुत्र सा सुषुम्णा कुत्र वा तस्याः सुषिरमिति न केनापि गुरुणा शिष्येण वा अन्विष्यते। वयं पञ्चभूतेभ्यो निर्मितमिदं जगदिति शुकवत् चर्वणं[1] कुर्म्मः परन्तु विज्ञानवेत्ता यन्त्रैः वायोस्तेजसोऽभिव्यक्तिं तेजसः वायौ प्रलयं खवर्तिनाम् पिण्डानाम् सर्गोपसर्गौ प्रत्यक्षं पश्यति। एभिरुपायैर्यद्ज्ञानसामग्री सम्पाद्यते सा सर्वेषाम् तत्त्वबुभुत्सूनाम् समा सम्पत्तिः। तां विना अपूर्णं विकृतञ्च वर्तते अस्माकं ज्ञानं, दुःसाहसमात्रमस्त्यस्माकं दर्शनविषये प्रवचनम्। विज्ञानानुभूतिः अद्ययावत् विदेशीयासु भाषासु रक्षिता दृश्यते परन्तु नैतेन काऽपि महती बाधा उपस्थापिता। यदि विदेशीयैः संस्कृतभाषा अधिगता भवति तदा वयमपि विदेशीया भाषा अवगन्तुं शक्नुमः। न तु भाषाज्ञानेन व्यवधानं क्रियते परन्तु जिज्ञासाभावेन। अस्माकं पूर्वे पुरुषा ज्ञानोपलब्धिक्षेत्रे पथिकाः आसन् परन्तु वयं तैः प्रशस्तं मार्गं विहाय भगवन्तम् कूपमण्डूकम् आदर्शपीठे संस्थाप्य पदे पदे हास्यास्पदत्वं व्रजामः। श्रुतिस्मृतिभिः सह पुराणान्यपि प्रमाणयद्भिरस्माभिर्न तानि पठ्यन्ते न च कोऽपि जानाति, ज्ञातुं यतते वा, यत्तेषूक्तानि



१ रटनम् इति युक्तम्।

वर्षद्वीपगिरिह्रदसरित्सागरनिर्झरादीनि कुत्र सन्ति सन्त्यपि न वा । पाण्डित्यविरोधिनः इमे विषयाः इति भूगोलेतिहासराजशास्त्रादिमीता वयं कौटिल्यसायणप्रभृतिविदुषां धवलयशः पङ्किलं कुर्मः ।

व्यावहारिकज्ञानविरहिता अस्माकम् स्नातका दीर्घश्रमोपार्जितां विद्यामर्थासम्पादिका-मनुभवन्त इच्छाभिवातशताक्रान्ता नैराश्यहतौजस इतस्ततो भ्रमन्ति ।

इयमवस्था आमूलपरिवर्तनमपेक्षते । अनेव विचारेण प्रान्तीयशासनेन वाराणस्यां संस्कृतविश्वविद्यालयस्य संस्थापनायायोजनं क्रियते । शासनस्येदम् तात्पर्य्यम् यत् परम्परागत-विद्यया सहैव नूतनानामपि शास्त्राणाम् संस्कृतमाध्यमेन अध्ययनं भवतु । विद्यार्थिनः व्याव-हारिकविषयेषु अन्यविश्वविद्यालयानाम् स्नातकैः सममेव ज्ञानं प्राप्नुयुः तैः सममेव जीविको-पार्जनक्षमा भवेयुः । नहि कर्तितहस्तपादः कश्चित् सन्तोषप्रतिष्ठां लभते । यदि संस्कृतच्छात्रैः समाजे वित्तं मानं च न लप्स्यते तर्हि न कोऽपि संस्कृताध्ययनाय प्रवर्तिष्यते । गवर्न्मेण्टसंस्कृत-विद्यालयोऽद्यापि विश्वविद्यालयकल्पः अस्त्येव । तं विश्वविद्यालये परिवर्तयितुं यद्यत् करणीयम् अस्ति तस्य सूत्रपातः अस्माभिरारब्धः ।

संस्कृतज्ञानकोषे अद्यापि प्रभूतानि रत्नानि निहितानि सन्ति येषामस्तित्वमपि न केनापि ज्ञातं विद्यते । विश्वविद्यालयस्य तत्त्वावधाने तेषाम् प्रकाशनं प्रस्थानग्रन्थानाम् मीमांसा निर्वचनञ्चापि अवश्यमेव कर्तव्यम् । अनेन शिथिलीभूता भारतीयसंस्कृतिः पुनरुज्जी-विता भविष्यति जगतश्च महानुपकारः सम्पत्स्यते ।

संस्कृतिशब्दस्य कोऽर्थो भारतीयसंस्कृत्याश्च किं लिङ्गमिति विचार्य्यम् । शब्दोऽयम् आंग्लभाषायाः 'कल्चर' शब्दस्य पर्य्यायरूपेण प्रयुज्यते । राष्ट्रविशेषो यस्माद् दृष्टिकोणात् जगद-वलोकयति, यद्वैचारिकमुपनेत्रं माध्यमीकृत्य लोकेषु चक्षूंषि निक्षिपति, तदेव तस्य संस्कृतिः । राष्ट्रस्य राजनीतिकव्यवस्था, सामाजिकमार्थिकं च संघट्टनम्, शिक्षाप्रणाली, साहित्यकला तथा औपासनिकपद्धतिः—सर्वमिदं संस्कृत्या उपकरणम् यैः सा स्वात्मानमभिव्यनक्ति । एतत्सर्वम् समासेन सभ्यतेत्युच्यते । बाह्यत्वात् अपरराष्ट्रस्य सभ्यताया अनुकरणं सौकर्य्येण क्रियते । हृतस्वातन्त्र्यलोकाः प्रायशः विजेतॄणां सभ्यतामनुकुर्वन्ति । तेभ्य एवं प्रतीयते यदियं सभ्यता, इयं व्यवहारसरणिः एव परेषाम् विजयकारणमस्ति । नेयं सर्वथा निर्मूला प्रतीतिः । यदि राष्ट्रस्य विचारधारा सत्यानुरूपा न भवेत्, यदि सा राष्ट्रस्य बाह्याभ्यन्तरानुभूतिषु सामञ्जस्यसंस्थापने अपर्य्याप्ता प्रतीयेते, यदि वा सभ्यतावयवाः सामाजिक्याद्या व्यवस्थाः

संस्कृतिं सुष्ठुरूपेण न प्रकटयन्ति तर्हि राष्ट्रस्य पराभवः अवश्यम्भावी। अस्तु। आभ्यन्तरत्वात्संस्कृतिः दीर्घकालादेव परिवर्तते। सभ्यतान्तरे गृहीतेऽपि संस्कृतिः पूर्ववत् तिष्ठति यथा नवीनपरिधानालङ्कृतोऽपि देहः पूर्ववद्दृश्यते। तथापि संस्कृतिरपरिवर्तनीया इति महती भ्रान्तिः। या आर्य्यसंस्कृतिर्हिन्दूसंस्कृतिर्भारतीयसंस्कृतिरिति नामभिरुद्दिश्यते सा भारतीयानामयुतवर्षीयानुभवस्य परिणामः। वैदिकविचारधाराभिः सह जाह्नव्या सह अपरसरितामिव बौद्धहितमुस्लिमख्रिष्टीयानां विचारधाराः सम्मिलिताः। आर्य्या द्राविडाः शकाः पठानाः मुगला यूरोपीयाश्च अस्याः संस्कृत्याः न्यूनाधिकांशभावेन स्रष्टारः। परन्तु यथा गङ्गाख्ये सम्मिलितजलप्रवाहे मूलभागीरथ्याः प्राधान्यम् सर्वैरङ्गीक्रियते एवम् भारतीयसंस्कृत्याम् औपनिषदविचारस्य प्राधान्यम् वर्तत एव। औपनिषदविचारस्तु अभेदभावनाप्राग्भार इति निश्चितम्। नाना वादैराकुलितोऽपि भारतीय आत्मा अद्वैतमेव स्वीकरोति, तस्मिन्नेव रमते। ऋषियोगिसिद्धनाथसन्तशतैः इयं भावना सहस्राब्दीषु दृढीकृता। सर्वं खल्विदं ब्रह्मेति साक्षात्कुर्वताम् व्युत्थानावस्थायामपि नदत्सु पशुषु, गायत्सु पक्षिषु, कूजत्सु भ्रमरेषु, हसत्सु कमलेषु, खेलत्सु बालेषु, क्रन्दन्तीषु विधवासु, गिरिसागरनिर्झरेषु, पुण्यापुण्येषु, भगवतः अर्द्धनारीश्वरस्य कण्ठध्वनिः शोश्रूयते। तस्य कृते सर्वे प्राणिनो विराजोऽवयवाः। तस्मात् परस्परं भावयन्त एव वयं श्रेयोऽवाप्स्यामः। अयमेव भारतीयसंस्कृत्याः विश्वस्मै सन्देशः।

अयमेव सन्देशः सत्याहिंसावतारेण महात्मगान्धिना दिग्दिगन्तेषु प्रसारितः। यथा नः पितर एतद्देशीया अग्रजन्मानो लोकान् धर्म्ममुपादिशन् तथैवाद्यापि भवद्भिः कर्तव्यम्। यो विदितधर्म्माऽपि प्रमादादन्यस्माद्वा कारणात् मोहगर्ते पतितान् नोद्धरते उद्धर्तुं न वा चेष्टते स पापीयान् भवति।

परन्तु परोपदेशकामैः प्रथमं स्वचरित्रमुन्नेयम्। मैत्र्याद्यभ्यासाल्लब्धचित्तप्रसादो नैष्कर्म्यरतस्त्यक्तदुराग्रह एव अन्यान् ऊर्ध्वं नेतुं समर्थो भवति। यस्य हृदयं दुःखदौर्मनस्यकुरुचिशोषणपारतन्त्र्यादिभिः मुहुर्मुहुः पच्यमानाः प्रजा दृष्ट्वाऽपि न द्रूयते यश्च लोकस्य कष्टनिर्मूलनाय न यतते मिथ्या हि तस्य धर्मगर्वो मृषा हि तस्य संस्कृतिः। कर्तव्यमिति भावेन लोकसेवा हि ज्ञानस्य विनियोगः लोकसंग्रहश्च साधु संस्कृत्याः यथार्थाभिव्यक्तिः।

१२ संकुचितदृष्ट्या वयं संस्कृतिशब्दस्य व्यावहारिकमप्यर्थं दूषयामः। न हि संस्कृतिः साहित्य एव प्रकटीक्रियते परन्तु संगीतचित्रस्थापत्यादिष्वपि तस्या अभिव्यक्तिर्भवति। साहि-

त्यग्रन्थेषु रसनिरूपणप्रसङ्गे यो विचारराशिरुपलभ्यते न स उपेक्षणीयः परन्तु सौन्दर्य्यस्य मीमांसा अस्माकम् दर्शनग्रन्थेषु सम्यग्रूपेण न विद्यते। वीणानोदितवायुलहर्य्यः, गायककण्ठनिःसृतस्वरमाला, कुशलतूलिकानिर्मितचित्रम्, स्मितकुसुमश्रीः, नर्तकचरणनिक्षेपः चन्द्रस्पर्शौत्सुक्योच्छलत्तरङ्गः—एतेषाम् दृग्विषयाणाम् समक्षे लब्धान्योन्याधिकारीणीन्द्रियाणि चेतसि प्रलीयन्ते चित्तं च सूक्ष्मस्पन्दस्वरूपिणा केनचित्परतत्त्वेन सह सारूप्यमाप्नोति। तदेव योगिजुष्टम् सौन्दर्य्यपदमन्वेष्टव्यम्, तत्रैव भक्तिकलाज्ञानविज्ञानसमाधिसम्मेलनभूमिः।

गतास्ते दिवसाः येषु संस्कृतं मृतमापेत्याक्रोशः श्रूयते स्म। अयम् तु संस्कृतस्य पुनरभ्युदयकालः समागतः। संविधानपरिषदा जीवितभारतीयभाषासु संस्कृतमपि स्वीकृतम्, तस्यापि नाम तासाम् तालिकायामङ्कितम्। यद्यधुनापि तस्य सार्वभौमप्रचारो न भविष्यति, तर्हि संस्कृतज्ञानामेव तत्र दोषः। न हि सर्वं प्रशासनेन कर्तुं शक्यते। सरकारः सर्वं करिष्यतीति तूलेन कर्णौ पिधाय अलसा एव तिष्ठन्ति न तु कर्म्मयोगिणः। संस्कृतं दुःखबोधमिति यो विश्वासो लोके वर्तते स बहूनपसारयति। एषा भ्रान्तिर्दूरमपनेया। संस्कृताध्यापनविधौ सारल्यं समावेश्यम्। हिन्द्याम् राष्ट्रभाषापदप्राप्तायाम् संस्कृतस्य प्रचारो निश्चयेन भविष्यति।

स्नातकैः तैत्तिरीयोपनिषद एकादशोऽनुवाकः पुनःपुनर्मननीयः। ततः श्रेष्ठतरं न केनापि दीक्षान्तावसरे प्रवक्तुं शक्यते। तस्यालोके भवद्भिः स्वकर्तव्यं निश्चेयम्। यत्स्वातन्त्र्यम् महात्यागतपःप्रभावादस्माभिर्लब्धम् मा तत् विशीर्येतेति सर्वैर्यतितव्यम्। वर्तमानशासकैः सह सहस्रेषु मतवैषम्येषु सत्स्वपि राष्ट्ररक्षायै राष्ट्रहितसम्बन्धाय च सर्वस्वम् उत्सर्जनीयम्। मनोवाक्कर्म्मणा वा यः कश्चित्प्रत्यक्षं व्याजेन वा कस्यचिदपि भारतीयस्य राष्ट्रभक्तिं किञ्चिदपि तन्वीं करोति स निश्चयेन देशद्रोहीति शब्दभागस्ति। भारते यः कश्चिद्वसति सोऽस्माकं बन्धुः। सर्वे वयं तस्य योगक्षेमस्य रक्षयितारः स्मः। स्वतन्त्रे तिष्ठति भारते अन्येषामपि दुर्बलानां दास्याक्रान्तानां शोषितानाम् च राष्ट्राणाम् त्राणं समुत्थानं च भविष्यति। संयुक्ताः सन्तो वयम् अभेद्या दुर्जेयाश्च स्मः। न कोऽप्यस्माकं तृणमपि विकर्तुं शक्नोति।

भगवानस्मभ्यं बलं वीर्य्यमोजश्च प्रयच्छतु, सर्वोपरि नो धियश्च प्रचोदयात्।

---

# कुलपति महामहोपाध्याय नारायणशास्त्री खिस्ते

का

# भाषण

आदरणीय सभापति महोदय, माननीय शिक्षामंत्री महोदय, देवियों तथा सज्जनों,

गवर्नमेन्ट संस्कृत कालेज के डेढ़ सौ वर्षों से भी अधिक जीवन के इतिहास में आज का अवसर विशेष उल्लास एवं महत्त्व का है जब कि हम इस विश्वविख्यात संस्था का चतुर्थ उपाधि-वितरणोत्सव मनाने को आज एकत्रित हुए हैं। ऐसे शुभ अवसर पर मैं आप सभी महानुभावों का हृदय से स्वागत करता हूं। इस संस्था का यह परम सौभाग्य है कि हमारे काशीनरेश महाराज श्री विभूतिनारायण सिंह महोदय ने इस सभा का सञ्चालनभार अङ्गीकार किया है। इस आसन पर आज आपको आसीन देख कर हम जिस सुख का अनुभव करते हैं उसे मैं किन शब्दों में व्यक्त करूँ। इस संस्था के इतिहास में आपके पूर्वपुरुषों का नाम अमर है। वास्तव में इस संस्था से आपका सम्बन्ध अत्यन्त आत्मीय है।

शिक्षायोजनाओं के इस सुवर्णयुग में संस्कृत शिक्षा की उन्नति की ओर प्रान्तीय सरकार का विशेष अनुराग प्रतीत होता है। यह उचित ही नहीं अपि तु न्यायपूर्ण भी है। यदि विदेशी शासकों को अपनी संस्कृति का सिक्का जमाने के लिये यह अभीष्ट था कि हमारी संस्कृत तथा संस्कृति दोनों ही उदासीनता की दृष्टि से देखी जायँ तो हमारे देश-भक्त लोकप्रिय शासकों का भी वह परम धर्म है कि अपनी संस्कृत तथा संस्कृति का सिर ऊँचा करें तथा उसे कदापि हीनता को न प्राप्त होने दें। यह अत्यन्त हर्ष का विषय है कि संयुक्त प्रान्त ने इस पुण्य कार्य में समस्त देश का नेतृत्व ग्रहण किया है तथा देश के कोने कोने से इस संस्था की नवीन योजनाओं के विषय में सर्वदा मुझसे पत्रव्यवहार होते हैं तथा जहाँ कहीं संस्कृत शिक्षा के विषय में इन योजनाओं को अपनाने का प्रयत्न

होता है वहाँ हमारी योजनाओं को लोग समझने का प्रयत्न करते हैं तथा हम से परामर्श लेते हैं। यदि सच पूछा जाय तो अब संस्कृत शिक्षा के कायाकल्प का समय आ गया है तथा संस्कृत जगत आशा भरी दृष्टि से समाजसेवी नेताओं की ओर देख रहा है। अब हम इस संस्था की वर्तमान प्रगति पर संक्षेप से प्रकाश डालेंगे।

## शुद्ध संस्कृत विभाग

अङ्गरेजी शासन के अवसान के समय इस विभाग में निराशा के चिह्न स्पष्ट थे। छात्र संख्या शीघ्रता से गिरती जा रही थी। छात्रों तथा अध्यापकों की दशा ऐसी हो गयी थी जैसे कि डूबती हुई नाव के यात्रियों की होती है। संस्कृत के दिग्गज विद्वान् जो भारत के रत्न हैं तथा जो आज विदेशों में होते तो पाश्चात्य समाज उनकी पूजा करता, वे ही विद्वान् ५०) के वेतन से इस महर्घता के समय में कैसे जीवन व्यतीत करते रहे होंगे, उनका परिवार कैसे जीवित रहता रहा होगा इत्यादि प्रश्नों का उत्तर कल्पना से परे है। छात्रों में जीवन का सर्वथा अभाव था। ५) मासिक की छात्रवृत्ति से संस्कृत का दीन छात्र कैसे जीवित रह सकता था इसका उत्तर सरस्वती देवी ही दे सकती है या दे सकती है वह संस्कृत विद्या जिसके चरणों पर लोट कर ये दीन छात्र अपने अभ्युदय काल के लिये आर्तनाद करते थे। अस्तु; अन्धकार, विपत्ति, उदासीनता, एवं झंझावात का समय बीता। संस्कृत शिक्षा ने अपनी कठिन रात वितायी। देश की स्वतन्त्रता का सूर्य उदय हुआ। देशप्रिय समाज सेवकों ने संस्कृत को हृदय से अपनाया। उसका फल है संस्कृत कालेज की सार्वभौम उन्नति, उसका उज्वलतम भविष्य, संस्कृत प्रेमियों का अभ्युदय युग तथा संस्कृत छात्रों में नवजीवन का उल्लास। आज यह व्यक्त करते हुए मुझे परम आनन्द का अनुभव होता है कि इस संस्था की छात्र संख्या पहले से अर्थात् सन् १९४० से प्रायः दूनी हो गयी। वेद वेदाङ्गों के अध्ययन के साथ छात्रों में आधुनिक ज्ञान के संचारार्थ, इतिहास, गणित हिन्दी राजशास्त्र इत्यादि विषयों का भी समावेश पाठ्यक्रम में किया गया है। छात्रों के लिये नूतन छात्रावास का प्रबन्ध हो गया है। उन्हें १०, १२ तथा १५ रुपयों की १२० छात्रवृत्तियाँ मिलने लगी हैं। गुजरात, मध्यप्रान्त, बंगाल, आसाम प्रान्तों की तथा शरणार्थी छात्रों की संख्या में इस वर्ष पर्याप्त वृद्धि हुई है। अत्यन्त आनन्द का विषय है कि प्राचीन काशी नगरी को अपना प्राचीन गौरव पुनः प्राप्त हो रहा है। थोड़े ही समय पूर्व प्रान्त के शिक्षा

सञ्चालक महोदय काशी पधारे थे तथा उन्होंने छात्रावासभवन के निर्माणार्थ भूमि का भी निरीक्षण किया है। श्रीमान् माननीय शिक्षामंत्री महोदय के अनुराग तथा कार्यदक्षता को स्मरण कर हमें पूर्ण विश्वास है कि यह छात्रावास भवन-निर्माण की योजना अविलम्ब फलवती होगी।

तदतिरिक्त इस वर्ष इस महाविद्यालयने सैनिक शिक्षा का सौभाग्य भी प्राप्त किया है। अभी तो यहाँ इस शिक्षा का सूत्रपात ही हुआ है पर भविष्य में हमें पूर्ण विश्वास है कि यह शिक्षा इतनी प्रिय तथा पल्लवित होगी कि हमारे छात्र शस्त्र तथा शास्त्र दोनों के प्रयोग में विचक्षण हो जावेंगे।

गत वर्ष की भाँति विद्वानों के भाषण का प्रबन्ध इस वर्ष भी किया गया था। सौराष्ट्र अन्तर्गत राजकोटस्थित वाटसन म्यूजियम के क्यूरेटर श्री हरिशंकर शास्त्री, राजकीय संस्कृत कालेज इन्दौर के श्री विनायक शास्त्री टिल्लू, श्री पं० रामाज्ञा पाण्डेय तथा जैन-यति मुनिकान्ति सागर के ज्ञानपूर्ण व्याख्यान इस वर्ष के विशेष उल्लेखनीय भाषण हैं।

मुझे यह व्यक्त करते हुए अत्यन्त हर्ष होता है कि इस संस्था के इतिहास में सर्व-प्रथम इस वर्ष ही हमारे छात्रों ने संस्कृत भाषण प्रतियोगिता में कीर्ति प्राप्त की। इस सम्बन्ध का उल्लेखनीय अवसर है स्याद्वाद-विद्यालय की अखिल भारतीय संस्कृत भाषण प्रतियोगिता जिसमें हमारे छात्रों ने पक्ष प्रतिपक्ष दोनों में सर्वप्रथम होने का सौभाग्य प्राप्त कर विजय चिह्न पाया।

व्यायाम तथा शारीरिक सुधार के क्षेत्र में हमारे छात्रों ने व्यवस्थित रूप से पदार्पण वैसे तो छ सात वर्ष पूर्व किया था। पाश्चात्य खेलों के साथ ही साथ भारतीय खेलों की ओर भी छात्रों की रुचि प्रत्येक वर्ष बढ़ती ही जा रही है। प्राचीन पद्धति की मल्लशाला निर्माण की योजना हमारे सामने है तथा श्रीमान् शिक्षा सञ्चालक महोदय उस पर विचार कर रहे हैं। ऐसे उदार तथा सहानुभूति पूर्ण शिक्षामन्त्री तथा शिक्षा-सञ्चालक महोदयों की कृपा से व्यायाम की व्यवस्था हमारे मनोनुकूल अवश्य हो जायगी यह हमारा दृढ़ विश्वास है।

 आज के संस्कृत के छात्र की तुलना दूर नहीं केवल ४ वर्ष पूर्व के संस्कृत के छात्र से कीजिये। आजका संस्कृत छात्र पहले से कहीं प्रफुल्लित, आशापूर्ण, जीवनपूर्ण, तथा

प्रगतिशील दृष्टिगोचर होगा। यह सब पुण्य फल है हमारे माननीय शिक्षामन्त्री महोदय की अतुल तपस्या का जिससे कि संस्कृत का मुख नित्य उज्ज्वल होता जा रहा है तथा हमारे कार्यों में हमें सतत सफलता मिलती जा रही है।

अब हमारे विद्यालय के अध्यापकों की दशा देखिये। यद्यपि हम यह कहेंगे कि विश्वविद्यालयों में इनके ही अनेक छात्र इनसे कहीं अधिक वेतन पाते हैं पर ५०) मासिक वेतन की तुलना १५०) मासिक वेतन से करें। कितना महान् परिवर्तन है। आज हमारे कालेज के विद्वानों के रोम रोम लोकप्रिय सरकार को आशीर्वाद दे रहे हैं। यद्यपि इस संस्था से सम्बद्ध १४०० से अधिक पाठशालाओं के विद्वान् अभी अपनी पूर्वस्थिति में ही पड़े हैं, पर उन्हें भी निराश नहीं होना चाहिये। पाठशाला-संघटन समिति का कार्य समाप्त होते ही अविलम्ब उनकी भी स्थिति अवश्य संन्तोषजनक हो जावेगी।

स्वतन्त्रता के इस सुवर्ण युगने हमारे वर्तमान विद्वानों का ही सिर ऊंचा नहीं किया अपितु संस्कृत विद्या के हमारे पूर्व धुरन्धरों की भी स्मृति तथा उनकी कीर्ति को सुरक्षित रखने का भी प्रशंसनीय प्रबन्ध आह्लाद-जनक है। गत वर्ष के उपाधि वितरणोत्सव में महामहोपाध्याय श्री बापूदेव शास्त्री सी० आई० ई०, म० म० श्री पं० कैलाशचन्द्र शिरोमणि, म० म० श्री पं० गंगाधर शास्त्री सी० आई० ई०, म० म० श्री पं० शिवकुमार शास्त्री महोदयों का चित्रोद्घाटन हमारे प्रान्तीय प्रधानमन्त्री माननीय पं० गोविन्दवल्लभ पन्त महोदय के कर-कमलों से हो चुका है। शिक्षा-विभाग के अधिकारी महोदयों के हम परम आभारी हैं, जिनके संस्कृत-विद्यानुराग से आज हमें यह सौभाग्य प्राप्त हुआ है कि इस उपाधिवितरणोत्सव में भी इस संस्था के चार अन्य विश्वविख्यात विद्वानों का चित्रोद्घाटन श्रीमान् महाराज बहादुर के कराम्बुजों द्वारा थोड़ी देर पश्चात् ही सम्पन्न किया जायगा।

## ऐंग्लो-संस्कृत विभाग

इस विभाग की उन्नति इस वर्ष स्थिर रही। केवल अंगरेजी में इण्टरमीडियेट श्रेणी तक की शिक्षा का कार्यक्रम इस विभाग में आज ६ वर्षों से चल रहा है। डा० भगवानदास समिति का प्रस्ताव था कि इस संस्था में बी० ए० श्रेणी तक की शिक्षा दी जाय ताकि संस्कृत के छात्र विदेशों से भी सम्पर्क स्थापित कर सकें। अभी तक इसकी पूर्ति नहीं हो

पायी है। पर लोकप्रिय सरकार इसपर तत्परता से विचार कर रही है तथा हमें आशा है कि संस्कृत कालेज को विश्वविद्यालय का रूप मिलते ही यह विभाग अंगरेजी भाषा की उच्च शिक्षा के साथ फ्रेंच, जर्मन, चीनी, तिब्बती तथा रूसी भाषा का भी ज्ञान करा सकेगा तथा संस्कृत-विश्वविद्यालयकी आन्ताराष्ट्रीयता का प्रधान साधक होगा। मुझे यह भी विश्वास है कि संस्कृत विश्वविद्यालय के गवेषणा कार्य में इस विभाग का प्रमुख हाथ होगा तथा यहां से संस्कृत के अनेक ग्रन्थ हिन्दी, अंगरेजी तथा अन्य आधुनिक भाषाओं में अनूदित होंगे।

## सरस्वतीभवन पुस्तकालय तथा छात्र-पुस्तकालय

इस विभाग की मुद्रित पुस्तकों में इस वर्ष २९३८ पुस्तकें नयी मोल ली गयी हैं तथा हस्तलिखित विभाग के विश्वविख्यात ५०, ००० पोथियों के समूल्य कोष में भी ८०० पुस्तकों की वृद्धि हुई है; जिसमें तन्त्रशास्त्र, पुराण, न्याय, वेदान्त तथा उपनिषदों के कई दुर्लभ ग्रन्थ हैं। छात्रों के लिये नये पुस्तकालय में इस समय २८०० पुस्तकें हैं। संस्कृत कालेज के छात्र अब तक सरस्वती भवन से पुस्तक बाहर नहीं ले जा सकते थे। इस नवीन पुस्तकालय की स्थापना से भी हमारे छात्र अत्यन्त सुख का अनुभव कर रहे हैं।

## अनुसन्धान-मन्दिर

हमारे माननीयशिक्षा मन्त्री महोदय के करकमलों द्वारा इस अनुसन्धान मन्दिर के उद्घाटन का सौभाग्य ३० जनवरी १९४८ को इस संस्था ने प्राप्त किया था। इस विभाग ने इस वर्ष प्रसिद्ध महीधर संग्रह की ५२६९ हस्तलिखित पुस्तकों की विवरणात्मक सूची तैयार की है। अनुसंधान कार्य में इस वर्ष व्याकरण तथा ज्यौतिष की प्रधानता रही है। व्याकरण विषयमें महाभाष्य के वार्तिक विषयों पर अष्टाध्यायी के क्रम से तुलनात्मक अनुसन्धान हुआ है। गणित ज्यौतिष शास्त्र में पाश्चात्य तथा पौरस्त्य बीजगणित का तुलनात्मक अध्ययन किया गया है तथा एक विद्वान् पाश्चात्य तथा पौरस्त्य दृष्टिकोणों से धूमकेतु पर भी निबन्ध लिख रहे हैं।

अनुसंधान के इस नवीन वातावरण से इस वर्ष इस विद्यालय के अध्यापकों में गवेषण तथा अध्ययन की भावना उद्बोधित हो गयी है तथा अध्यापन के दृष्टिकोण पर भी इसका उत्तम प्रभाव दीख पड़ता है। सारस्वती सुषमा, तथा देश के अन्य पत्रपत्रिकाओं में हमारे

कालेज के प्रायः सभी विद्वानों ने इस संस्था के इतिहास में इस वर्ष प्रथम बार अपने अनुसन्धानात्मक लेख दिये हैं। इनमें अधिकांश प्रकाशित हो चुके हैं तथा अन्य अभी प्रेस में हैं। पटना कालेज के अवकाश प्राप्त प्रोफेसर पं० रामाज्ञा पाण्डेय व्याकरणाचार्य, पी० इ० एस० (रिटायर्ड), को हमारी सरकार ने व्याकरण तथा दर्शनशास्त्र पर अनुसन्धान के लिये विशेष पुरस्कार देकर नियुक्त किया है। अग्रिम वर्ष तक "व्याकरण दर्शन" विषय पर उनकी पुस्तक का प्रथम भाग प्रकाशित हो जायगा। इस लेख का संक्षेप प्रकाशित हो चुका है। इसी प्रकार यदि अन्य प्रान्तों तथा इस प्रान्त के कार्यशील विद्वान् अवकाश प्राप्ति के पश्चात् या इस संस्था में अनुसन्धानार्थ आमन्त्रित किये जायँ तो संस्कृत विद्या को गौरवान्वित होने में तनिक भी सन्देह नहीं है, यह मेरा दृढ़ विश्वास है। हमारे लोकप्रिय माननीय शिक्षामन्त्री महोदय की कुशाग्र बुद्धि एवं कार्यदक्षता के फलस्वरूप ही संस्कृत कालेज में यह अनुसन्धानात्मक लहर उत्पन्न हुई है। यह संस्था उनके आभार से मुक्त नहीं हो सकती।

## शिक्षण-शास्त्रकी व्यवस्था

इस संस्था के इतिहास में शिक्षण-शास्त्र की योजना एक सर्वथा नवीन वस्तु है। यह शिक्षा संयुक्तप्रांतीय पाठशालाओं के चुने हुए अध्यापकों को प्रतिवर्ष ग्रीष्मावकाश में दी जाती है। शिक्षा सिद्धान्त, प्राचीन भारतीय शिक्षा, पाश्चात्य शिक्षा का इतिहास, शिक्षामनोविज्ञान, शिक्षण विधियाँ, पाठशाला प्रबन्ध तथा स्वास्थ्य विज्ञान के साथ छात्राध्यापकों के ज्ञान विस्तारार्थ भूगोल, इतिहास, नागरिक शास्त्र, संस्कृत साहित्य का इतिहास इत्यादि विषय भी इसके पाठ्यक्रम में रखे गये हैं। इस वर्ष हमने इस शिक्षा की साढ़े तीन मास की विस्तृत योजना का प्रस्ताव किया है जिसके अनुसार अध्यापकों को अध्यापन कला का व्यावहारिक ज्ञान भी कराया जायगा। १२५ अध्यापक इस शिक्षा से लाभ उठा चुके हैं। स्थान के अभाव से अनेक सज्जनों को हमें प्रतिवर्ष निराश करना पड़ता है। हमारे माननीय शिक्षामन्त्री महोदय इस शिक्षण को शिक्षणशास्त्र-विद्यालय (Training college) का रूप देने को उत्सुक है। इसकी पूर्ति भी अविलम्ब हो जायगी, यह हमारा पूर्ण विश्वास है।

## ललित कला सम्मेलन

गत वर्ष प्रान्तीय सरकार की उदारता से हमें संस्कृत नाट्याभिनय का सदवसर प्राप्त हुआ था। भास विरचित "दूतघटोत्कच" तथा "कर्णभार" के सफल अभिनय ने संस्कृत

जनता को रोमाञ्चित किया। माननीय शिक्षा-सचिव महोदय ने संस्कृत में एकांकी नाटकों के इस सर्वप्रथम सफल प्रयास से गद्गद् होकर इसकी भूरि-भूरि प्रशंसा की तथा कतिपय अभिनेताओं को पदक प्रदान किया जो अभी वितरित किये जायंगे। इस प्रोत्साहन से उल्लसित होकर हम लोगों ने यथासम्भव समस्त भारतीय कला सम्बन्धी अनुसन्धान तथा उनके व्यावहारिक प्रदर्शन के निमित्त इस विद्यालय के छात्रों को प्रधानतः प्रोत्साहित करके "ललित-कला सम्मेलन" की स्थापना की तथा इसका उद्घाटन मा० शिक्षा-सचिव महोदय के करकमलों से कल हो चुका है। कालेज के कार्यकर्ता तथा छात्र दोनों ही इस सम्मेलन के सदस्य हैं। इस सम्मेलन द्वारा आयोजित संगीत, नृत्य, तथा कवि-सम्मेलन का प्रदर्शन कल आपने देखा भी है। विद्वानों ने हमारे छात्रों के इस मौलिक तथा संस्कृत जगत में सर्वथा नूतन तथा अद्भुत प्रयत्न की मुक्तकण्ठ से प्रशंसा भी की है।

## परीक्षा-विभाग

रजिस्ट्रार संस्कृत कालेज परीक्षा इस विभाग के मुख्य कार्यकर्ता हैं। गत वर्ष से रजिस्ट्रार तथा प्रिंसिपल का पद अलग अलग हो जाने से रजिस्ट्रार का कार्यालय इस वर्ष प्रिंसिपल के कार्यालय से कार्य सौकर्य के ध्येय से पृथक् कर दिया गया है।

इस वर्ष देश के विभिन्न भागों के ५९ केन्द्रों में हमारी परीक्षाएँ हुई हैं। संयुक्त प्रान्त के हरद्वार तथा गाज़ीपुर, मध्यप्रान्त के विलासपुर तथा सागर तथा दिल्ली प्रान्त के दिल्ली नगरों में हमारे नये केन्द्र स्थापित हुए हैं।

गवर्नमेन्ट संस्कृत कालेज की वर्तमान प्रगति का देश की संस्कृत-शिक्षा पर गम्भीर प्रभाव पड़ रहा है। इसकी चर्चा मै कर चुका हूं। इस संस्था की देशव्यापिनी कीर्ति का ही फल है कि देश की जनता ने केन्द्रों की संख्या में वृद्धि करने के लिये अनेक पत्र लिखे हैं तथा आवेदन पत्र भेजे हैं। सुदूर प्रान्तों में समुचित निरीक्षण कार्य की व्यवस्था न हो सकने के कारण तथा रजिस्ट्रार के कार्यालय में कार्यकर्ताओं की कमी होने के कारण हम नये केन्द्र स्थापित कर सकने में अभी विवश हैं। पर सरकार इन प्रश्नों पर गम्भीरता एवं तत्परता से विचार कर रही है तथा अविलम्ब जनता की इस योग्य माँग की पूर्ति हो जावेगी और अन्य प्रान्तों में शीघ्रही हमारे और अधिक केन्द्र स्थापित हो जावेंगे।

इस वर्ष १४१९४ छात्रों ने हमारी विभिन्न परीक्षाओं में भाग लिया। इसमें २०० महिलाएँ तथा २३ अन्ध छात्र भी सम्मिलित हैं।

## अधिकृत पाठशालाएँ

इस संस्था से सम्बद्ध पाठशालाओं की संख्या इस समय १४०० है। इनमें से २६० पाठशालाएँ सरकारी सहायता प्राप्त करती हैं। सरकारी सहायता प्राप्त पाठशालाओं में पठन पाठन, प्रंबन्ध, निरीक्षण तथा आर्थिक स्थिति का प्रबन्ध यथेष्ट होने से इनमें अधिक जीवन प्रतीत होता है और इन्हीं संस्थाओं का परीक्षा फल भी अन्य संस्थाओं से प्रायः अधिक सन्तोषप्रद होता है। संस्कृत पाठशालाओं के यथेष्ट निरीक्षण के निमित्त सरकार ने दो निरीक्षकों का पद बढ़ा दिया है। मेरी दृष्टि में यह आवश्यक है कि प्रत्येक रीजन में एक एक सहायक निरीक्षक के नियुक्त किये जाने पर ही निरीक्षण कार्य सन्तोष प्रद हो पावेगा तथा तभी पाठशालाओं की दशा में यथेष्ट सुधार भी हो सकेगा। अतएव दो और निरीक्षकों की नियुक्ति के प्रश्न पर सरकार विचार कर रही है। संस्कृत पाठशालाओं के समुन्मेषार्थ तथा संस्कृत विद्या के प्रचारार्थ संस्कृत विश्वविद्यालय की योजना के साथ संस्कृत पाठशाला संगठन की योजना पर भी हमारी लोकप्रिय सरकार दक्षता से कार्य कर रही है। संस्कृत का भविष्य अब अत्यन्त उज्ज्वल है इसमें तनिक भी सन्देह नहीं।

संस्कृत पाठशालाओं की संगठन योजना में सरकारी सहायता में वृद्धि तथा अध्यापकों के वेतन क्रम का निर्माण अवश्य यथेष्ट होना चाहिये क्योंकि ये संस्कृत के प्रचार तथा अभ्युदय के आधारभूत प्रश्न हैं। संस्कृत विद्या की उन्नति के हेतु हमें सर्वप्रथम पाठशालाओं को आर्थिक सहायता देनी होगी ( जो उनके वार्षिक व्यय का दो तिहाई से कम न हो ) तथा दीन अध्यापकों के यथेष्ट जीवन यापन की व्यवस्था भी करनी होगी। हमारे संस्कृत-विद्यानुरागी शिक्षा अमात्य इसके लिये अवश्य चिन्तित हैं तथा मुझे पूर्ण विश्वास है कि हम शीघ्र ही सफलमनोरथ होंगे।

## संस्कृत-विश्वविद्यालय

संस्कृत-विश्वविद्यालय को पुनीत घोषणा से समस्त संस्कृत जगत उल्लसित हो उठा है। १०१
बिहार के गवर्नर महोदय का संदेश आपने अभी सुना है। उनका विश्वास है कि इस महान्

सांस्कृतिक कार्य में युक्तप्रान्त अन्य प्रान्तों का अग्रणी होगा तथा थोड़े ही काल में भारत के प्रत्येक प्रान्त संस्कृत विश्वविद्यालयों से चमत्कृत हो जावेंगे।

काशी का संस्कृत-विश्वविद्यालय अपने नाम को सार्थक करेगा। यह वास्तव में भारतीय संस्कृति की आदर्श संस्था होगी। मानव तथा आध्यात्मिक ज्ञान का विशालक्षेत्र इसका आधार होगा तथा आधुनिक ज्ञान का अनन्त भाण्डार भी इसकी परिधि के बाहर की वस्तु न होगी। मुझे विश्वास है कि संस्कृत-विश्वविद्यालय भारतीय शिक्षा के इतिहास में एक सर्वथा नवीन अध्याय उपस्थित करेगा। आधुनिक पाश्चात्य शिक्षा के दुर्गुणों को प्रणष्ट करने का यह एक महान् यन्त्र होगा।

मानवजीवन का लक्ष्य द्रव्योपार्जन कदापि नहीं है। समाज में ऊँचे पदों के लिये लालायित रहना हमारा भारतीय आदर्श कभी भी नहीं रहा है। चतुष्पुरुषार्थ की सिद्धि ही हमारी प्राचीन शिक्षा का एक मात्र ध्येय था। संस्कृत विश्वविद्यालय धर्म, अर्थ, काम, मोक्ष का साधक होकर आधुनिक शिक्षा जगत् का प्रधान पथप्रदर्शक बनेगा। कोई चिन्ता नहीं कि अभी हमारे छात्र ऊँचे से ऊँचा सरकारी पद न प्राप्त करें पर वे चरित्र निर्माण की जिस उच्चभूमि पर पदार्पण करेंगे उसके समक्ष संसार की समस्त विभूतियाँ नगण्य होंगी।

वर्तमान विश्वविद्यालयों की ओर कृपया दृष्टिपात करें। आधुनिक शिक्षा के इन विशाल केन्द्रों को यह अभिमान है कि वे अपने छात्र को शिक्षित करते हैं, उनकी बुद्धि का विकास करते हैं। सहसा मैं यह कह देने का साहस तो नहीं करता कि आधुनिक विश्वविद्यालय इस प्रकार की समाजोन्नति में सफल नहीं हुए पर वस्तुस्थिति तो प्रत्यक्ष ही है। हाँ, एक साधारण संस्कृत के छात्र से इन विश्वविद्यालयों के छात्र में अधिक बुद्धि तत्परता होती है जो उसके बनावटी जीवन का फल है। पर क्या इन छात्रों में वास्तविक मौलिकता, विचारस्वातंत्र्य, ज्ञान की पूर्णता, व्यवस्थित विचार-शक्ति, आत्मविश्वास तथा संघटनात्मक प्रवृत्ति—ये सब आदर्श शिक्षा के परिणाम ढूँढ़े भी मिल सकते हैं ?

मैं एक प्रश्न पूछता हूँ, क्या इन विश्वविद्यालयों ने अपने छात्रों में आदर्श मानवता के भाव जागृत किये हैं ? हमारी संस्कृत शिक्षा अब भी, इस पतनावस्था में भी, कम से कम मानवता से ओत प्रोत है इस कठोर सत्य का संस्कृत जगत अभिमान रखता है। हाँ यह मैं मानता हूँ कि इन विश्वविद्यालयों ने राजप्रश्रय तथा आधुनिक ज्ञान के अवलम्बन से अपने

थोड़े से छात्रों की जीविका का प्रश्न हल कर दिया है। संस्कृत जगत इस लाभ से अभी वञ्चित है। पर सेवा, आत्मत्याग, सरलता सचाई आदि सद्गुण आधुनिक पाश्चात्य शिक्षा-दीक्षित छात्र में सुलभ हैं क्या ?

सज्जनों, हो सकता है कि मेरा यह कोरा प्रलाप ही हो पर संस्कृत विश्वविद्यालय आधुनिक विश्वविद्यालयों के उपरि-उक्त असफल प्रयत्नों की पूर्ति में उनका सहायक होगा। यहां के छात्र मानव जगत् के पथप्रदर्शक होंगे, इसमें शिक्षित-स्त्रियाँ सावित्री, अरुधन्ती, मैत्रेयी, गार्गी, लीलावती, सुलभा, अहिल्या तथा लक्ष्मीबाई के परमपुनीत आदर्शों से परिप्लुत होंगी तथा भावी भारत के निर्माण में उनका प्रमुख हाथ होगा ; यहां के शिक्षित नवयुवक कृष्ण, राम जनक, वशिष्ठ, याज्ञवल्क्य, बुद्ध आदि हमारी प्राचीन संस्कृति एवं ज्ञान के महारथियों के आदर्शों का पालन करते हुए शिवाजी, राजाराममोहनराय, रानडे, विवेकानन्द, ईश्वरचन्द्रविद्यासागर, सालारजंग, माधवराव, दादाभाई नौरोजी, महामना मालवीय, स्वामी दयानन्द सरस्वती, महात्मा गांधी तथा रवीन्द्रनाथ टैगोर के पदचिह्नों का अनुसरण करेंगे।

ये छात्र भारत भूमि के क्या समस्त संसार के देदीप्यमान रत्न होंगे स्वतन्त्रता देवी से लालित भारत के ये रत्न अपनी मातृभूमि का मुख उज्ज्वल करेंगे इसमें तनिक भी सन्देह नहीं।

अन्त में महाराज बहादुर श्रीमान् विभूतिनारायण सिंह महोदय के प्रति मैं पुनः कृतज्ञता प्रगट करता हूं कि आपने अपने अध्ययन-काल का अमूल्य समय देकर हमें सफल मनोरथ किया। आपने संस्कृतविद्या को जो प्रश्रय दिया है उसके निमित्त भारतीय संस्कृति एवं भारतीय विद्या के पोषक आपका आभार मानते हैं। आपकी संरक्षकता में सुरभारती का उद्धार हो यही श्री काशी विश्वनाथ से मेरी विनम्र प्रार्थना है। ॐ शान्तिः शान्तिः शान्तिः।

---

## राजकीय संस्कृत कालेज का उपाधि वितरणोत्सव

# महाराज विभूतिनारायण सिंह का भाषण

वाराणसेय राजकीय संस्कृत कालेज के चतुर्थ उपाधि वितरणोत्सव के अवसर पर सभापति पद से काशी नरेश महाराज विभूतिनारायण सिंह ने निम्नलिखित आशय का भाषण किया—इस विद्यालय के साथ मेरे पुण्य श्लोक पूर्वजों का इस संस्था के जन्म से ही उदार सम्बन्ध पुनः नवीनता धारण करके प्रगाढ़ता प्राप्त करे इस अभिप्राय से मैंने आप के दिये इस सम्मान को स्वीकार करना ही उचित समझा। गवर्नमेंट संस्कृत कालेज के उपाधि वितरणोत्सव की दृष्टि से यह सम्मेलन अन्तिम समझा जा सकता है। निकट भविष्य में ही ये परीक्षाएं विश्वविद्यालय की परीक्षाओं के रूप में परिणत हो जायंगी ऐसी आशा है। अतः यों कहना चाहिये कि यह उत्सव सन्धिकाल का उत्सव है, जब एक प्रणाली समाप्त होकर दूसरी प्रणाली प्रारम्भ होने जा रही है। हमारी देववाणी भी अनेक युगों के अनेक प्रकार के विचारविमर्शों को अन्तर्भूत करती हुई भी अपनी प्राचीन परम्परा को अविच्छिन्न रक्खे हुए है। एक भी वाक्य और किंचिन्मात्र भी स्वर का भेद किये विना पढ़े जाने वाले वेदपाठ को सुनकर आज भी वैदिक युग का चित्र हमारी आँखों के सामने उपस्थित हो जाता है। यह बात अन्य साहित्य में कहां है? इसी कारण प्राचीनता को इस भाषा और इस साहित्य का गौरव कहना पड़ता है। इस देववाणी ने इसी भारतवर्ष में वैदिक युग, सूत्रयुग, स्मृतियुग, बौद्धयुग, जैनयुग, मुसलिमयुग और अभी-अभी ब्रिटिश युग, इन सभी युगों का साक्षात्कार किया है। यदि साधारण सी भी अशुद्धि को न सहन करने वाली इसकी व्याकरणानुगामिता, प्रत्येक पंक्ति पर विचार विमर्श के धनी ठोस विद्वानों को उत्पन्न करने वाली इसकी अध्ययनाध्यापन शैली और सूक्ष्मेक्षिका से परिपूर्ण इसकी विषय विवेचना इससे दूर कर दी जायगी तो यह निःसार हो जायगी। संस्कृत विश्वविद्यालय के प्रवर्तकों को इस वस्तुस्थिति को आंखों से ओझल न होने देना चाहिये।

इसमें कोई सन्देह नहीं कि संस्कृत शिक्षा में सुधार की अत्यन्त आवश्यकता है।

नवीन विषयों का प्रवेश अनिवार्य है। विना उसके ज्ञान के संस्कृत पण्डितों में लौकिक कार्यों की शक्ति झुलसी हो गयी है। कोई कारण नहीं कि शैली, वड्सवर्थ और शेक्सपीयर के

अध्येता कलक्टर, कमिश्नर और मन्त्री बन सकें और व्यास, बाल्मीकि एवं कालिदासादिके अध्येता इन कार्यों के अयोग्य समझे जायं, किन्तु इस सत्य को भी हम छिपा नहीं सकते कि केवल पोथी पण्डित इन कामों को नहीं कर सकते। इसलिए संस्कृतज्ञों को इतर विषयों में भी दूसरों से समानता प्राप्त करनी होगी। विना इसके किसी प्रकार काम नहीं चल सकता। यह सब होते हुए भी, मेरा निवेदन केवल इतना ही है कि नवीनता के चक्कर में कहीं हम ऐसी न कर बैठें कि फिर हमें संस्कृत की पंक्तियों का अर्थ बताने वाले पण्डित प्राप्त ही न हों। इन प्राचीन पण्डितों का भी समादर हम उतना ही करें जितना नवीनों का, जिससे संस्कृत शिक्षा की प्राणभूत प्राचीनता नष्ट न हो जाय और विश्व को हम कुछ दे सकें।

## नवीनता दूषण न हो

इसी प्रसंग में यह बात भी कहना कदाचित् असामयिक न होगा कि संस्कृत विश्व-विद्यालय का कुलपति तथा अध्यापक प्रतिष्ठित संस्कृत विद्वान ही होना चाहिये। उनकी योग्यता और प्रसिद्धि इंगलिश की अपेक्षा संस्कृत में अधिक हो। जहां केवल विद्यालय रूप में इस संस्था के अध्यापक श्री शिवकुमार शास्त्री, श्री गंगाधर शास्त्री, श्री बापूदेवजी, श्री सुधाकर द्विवेदी आदि संस्कृत भाषा के धुरन्धर विद्वान् और डा० श्री गंगानाथ झा एवं श्री गोपीनाथ कविराज जैसे विश्वविख्यात संस्कृतज्ञ प्रिंसिपल रहे हों वहां विश्वविद्यालय बनने पर इसका कुलपति कैसा होना चाहिये यह तो सभी समझ सकते हैं। सीनेट में भी केवल इंगलिश प्रधान विद्वान् न आकर इस विद्यालय से संबद्ध पाठशालाओं के प्रतिनिधियों को कार्य करने का अवसर देना चाहिये। हां कुलपति ऐसा हो जो उनलोगों को इस प्रणाली से परिचित कराने में उनका मार्ग दर्शक बन सके। सारांश यह कि नवीनता इस विश्व-विद्यालय का भूषण हो, दूषण नहीं।

एक बात मुझे और सूझ रही है, पर मुझे भय है कि आप लोग कदाचित् उसे समय से पूर्व समझें, किन्तु, मैं समझता हूं संस्कृत विश्वविद्यालय के लिये तो यह शोभाजनक ही होगा, वह यह है कि इस विश्वविद्यालय का विधान और सब कारवाई हिन्दी में ही हो, जिससे यह विद्यालय दूसरे विद्यालयों का पथप्रदर्शक बन सके। यह नवीनता संस्कृतज्ञों के लिए सुविधा जनक होने के साथ साथ उनमें कार्यदक्षता भी उत्पन्न करेगी ऐसा विश्वास है।

# सम्पादकीयम्

## सार्वभौमगणतन्त्रम्, अस्माकञ्च विधेयम्—

विगतजनवरीमासस्य षड्विंशतारिकायाः मध्यरात्रिः भारतीयानां महतो भाग्योदयस्य क्षणः। द्वादशशताब्दीत उत्तरोत्तरं संह्रसज्जीवनं कार्पण्यदैन्यपर्यवसायि भवद् स्वस्वरूपमेव विसस्मार। आत्मविस्मृतः कमन्यं प्रभावयेत्, फलतो विष्णुक्रान्त-रथक्रान्त-अश्वक्रान्तार्य-संस्कृतिः संख्यामेयहिन्दूनां जातिशरीराद्यवलम्ब्याग्रहेषु कथञ्चिन्निःश्वासं दधती विदेशिभिः परिक्लान्ता आसीत्। तेहि धन्याः, ताश्च जनन्यः कृतार्थाः, यासामात्मजानां त्यागतपोभ्यामियं भारतभूर्भारतीयाऽभवत्। अस्मिन् स्वातन्त्र्याभियाने यैः सहस्रशः प्रातःस्मरणीयैर्भारतीयैः सस्मितं स्वप्राणाः समर्पिताः, स्वीयं कैशोरं यौवनं भुक्तिरभिवृद्धिश्च तिलशो विच्छिद्य विच्छिद्य उपहृतानि तेषां चरणचिह्नेषु वयं सदा नतशिरसः स्मः। तत्र भवान् विश्ववन्द्यो महात्मा यस्य सत्याहिंसयोः प्रभावेण न केवलं भारतं न च केवलं भारतीया संस्कृतिः प्रकाशमुपगृहीतवती, प्रत्युत समस्तत्रस्तदीनार्तजनाः क्रोधेर्ष्याज्वालायां परिदग्धा च मानवीय-संस्कृतिः—एकमेव शान्ति-शरणम्, एकमेव च आवासं लेभे। तस्य महात्मनश्चरणयोर्वयं श्रद्धानताः स्मः।

भारतं स्वतन्त्रमभूत्, त्रिंशत्कोटीनां मानवानामियं बृहत्तमा भूः एकस्मिन् संघे, एकस्मिन् राष्ट्रध्वजे एकविधाने चाद्य द्वादशशताब्द्यनन्तरं स्वास्थ्यं लेभे। किमेतावदेवालम्? तस्वबुभुत्सोर्यथा ततः किम्? ततः किम्?? इति प्रश्नधारा न निवर्तते तथा वर्धिष्णो राष्ट्रस्य समाजस्यापि वा कर्मधारा न विरमति। अन्यथा यथा पराभूतेर्जाड्यं जीवनं जडं विदधाति तथा विजयस्यापि मोह-मदिरा विजयिनं पूर्वतोऽप्यधिकं प्रच्यावयति प्रमत्तञ्च तं सर्वथा प्रणाशयति। अतः स्वातन्त्र्यावाप्त्यनन्तरं तत् परिरक्षितुं विकासयितुञ्च यो महान् प्रयत्नः यश्च त्यागः यच्च परिवर्तनमपेक्ष्यते तदर्थं भारतीयैर्जागरूकैर्भाव्यम्। राज्यक्रान्तेर्भारं समाजार्थक्रान्तिरेव वक्ष्यति। अतोऽस्यां भाविन्यां क्रान्तौ यः समाजः या च संस्कृतिः स्वकर्त्तव्यं न निर्वर्तयिष्यति, जनजीवनञ्च दुरपह्नवं शान्तं शिवञ्च निर्मातुं न प्रयतिष्यते, स न केवलं देशघातं कर्त्तव्यघातमेव च विधास्यति, अपितु ससंस्कारं स्वात्मानमपि हनिष्यति। एते आत्महनाः समादायापि साधु-

जनसेवितां सुसंस्कृतां परम्परां गृहीत्वाऽपि पुरातनज्ञानविज्ञानसेवितां व्यवस्थाम्, आत्मानं रक्षितुं न प्रभविष्यन्ति। युनानीसंस्कृतिः अष्टशताब्दीं रोमसंस्कृतिर्नवशताब्दीं बाइजेन्टियम-संस्कृतिर्दशशताब्दीं यावत् मानवसभ्यताया निर्माणे दर्शन-काव्य कलादिभिर्नवां शिवां समाजार्थव्यवस्थां वितरन्त्यपि यदा लोकजीवनात् पृथग्भूय धर्मसंस्कृतिपोषणव्याजेन निर्जीव-कर्मकाण्डपाखण्डाद्यभिक्रान्ताऽभूत् तदा स्वात्मनैव स्वात्मानं सञ्जहार। अतो जीवितुमिच्छता समाजेन धर्मेण च नूतनायां विभिन्नपरिस्थितौ सामञ्जस्यवता, धारकेण, प्रस्तुतप्रश्नप्रसाधने च पुरातनसंस्कारसूत्रमवलम्ब्य ज्ञानविज्ञानैर्जीवनं नवं सुदृढं सुखमयं विधातुं अग्रगामिणा भवितव्यम्।

वयं हि पुरातनभारतीयसंस्कृत्यभिमानिनः, विशेषतोऽस्माकमेव पुरतोऽस्य विशालतमस्य भारतसंघस्य सामाजिकमैक्यं निर्मातुं प्रश्न उपस्थितो वर्तते। इतः पूर्वं भारतवर्षे यद्यपि एतावन्महद् राजकीयैक्यं नासीत्, सम्राजः अशोकस्यापि बृहत्तरशासने भारतीया एव पाण्ड्य-केरलादयः प्रदेशाः पृथग् आसन्, तथापि सुदृढमैक्यमासीत्, तच्च—सांस्कृतिकम्। तेनैव च कामपि राज्यशक्तिमनपेक्ष्य भारताद् बहिरपि भारतीया संस्कृतिः प्रसृता। अद्यापि भारताद् बहिश्चत्वारिंशत्कोटिशो मानवा भारतीयबुद्धसम्प्रदायानुगा मनः भारतं स्वतीर्थमामनन्ते। यदि पुनः स उदारः पुरातनः संस्कार उद्बोधितः स्यात्तदा तदेव संस्कारसूत्रं भारतीयानां जाति-सम्प्रदाय-वर्गगतशतसहस्राधिकविविधतासु ऐक्यं स्थापयेत्। विविधताया न भेतव्यम्, विविधतयैव भारतीयसंस्कृतिर्मानवीयसंस्कृतिर्जाता। अस्माकमेवैतत्सौभाग्यं यद् हिन्दुषु संसारस्य विंशतेरप्यधिकराष्ट्राणि त्रिंशतोऽप्यधिकविदेशिजातीयाः साम्प्रदायिकाश्च आवासं लब्ध्वा भेदशेषतां गताः। इदमेवास्याः संस्कृतेर्महत्त्वं यद् अस्याः सनातनसिद्धान्ता स्वस्मिन् अन्याः संस्कृतीरादातुं पूर्वं ताः स्वानुरूपाः विदधति, पश्चाद् एभिः संग्रहैः यन्नवं किञ्चित् स्वरूपं विकसति तत् सनातनस्यैव मौलिकरूपं पर्यवस्यति। एवं विविधता भारतीयानां भूषणं भवति। अद्यापि विविध-प्रान्त-भाषा-जाति-सम्प्रदायानामनेकानेकगुणानां संग्रहेण समन्वयेन विविध-काव्यकलादिपूरित-भारतराष्ट्रमेकमखण्डं भविष्यति। परञ्चात्र यदि स्वपूर्वसंस्कारान् सर्वथा विस्मृत्य शरीर-प्रदेश-जाति-भाषाणामेव स्वपिष्टतोऽभिनिवेशो वर्धितश्चेद् इयं विविधतैव समूलं प्रणाशयिष्यति। इयमेव हि सांस्कृतिकी एकता भारतस्य सामाजिकीमखण्डतां जनयिष्यति, अखण्डा हीयं सामाजिकी भावना प्रस्थापितराजकीयैक्यस्य भारं धक्ष्यति। सामाजिकक्रान्त्यै देहाद् देहधर्माद् वा आत्मनो भेदज्ञानमपेक्षितं भवति, यतः क्षुद्राभिनिवेशा अस्तंगता यत्र समाजस्यापूर्यमाणभावस्यौदार्यं सहिष्यन्ते।

यस्मिन् समाजे क्रान्तिरुपस्थाप्यते तस्य संस्कारपरम्पराज्ञानम्, तदन्तर्वर्तिसामान्यजनैः सम्पर्कः, तेषां विश्वासलाभश्चेत्यादि अनिवार्यमस्ति। इदन्तावच्छोचनीयम्—यदद्य भारतवर्षस्य ये निर्मातारस्तेषु स्वीयपरम्पराभिज्ञा अङ्गुलिनिर्देश्या एव सन्ति। आङ्ग्ल-शिक्षाया अयमेवाभिशापः प्रथमो—यदसौ स्वीयपुरातनव्यवस्थासु अविश्वासमुत्पाद्य जीवन-दृष्टिं च पाश्चात्त्यभावप्रवणां विधाय शिक्षिताशिक्षितयोर्नागरिक-ग्रामीणयोरन्तरेवं दुर्लङ्घ्यं गर्त्तं कृतवान् येन द्वयोः सहभाव एव खपुष्पायितः। एवं सम्पर्कोऽनिशं ह्रसन् पारस्परिकं विश्वासं व्यनाशयत्। संस्कार-सम्पर्क-विश्वासानुगामिनी क्रान्तिः तेषामभावे कथं शुभाय स्यात्। समाजक्रान्तिः पुरातनोत्पाटनेन नहि; संशोधनेन, परिवर्धनेन च जायते। वयं विनिवेदयामो—भारतीयसंस्कृत्यभिमानिषु संस्कृतज्ञेषु—अद्यापि ग्रामवासिभिः सम्पर्कः, तैः समं जीवनदृष्टिः, तेषाञ्च विश्वासः संस्कारः, संस्कृतमाध्यमेन भारतीयपरम्पराज्ञानम् इत्येतानि सर्वाणि समाजसुधारायापेक्षिततत्त्वानि अवशिष्यन्ते।

परञ्च संस्कृतज्ञेषु यथा पूर्वोक्ताः समाजानुरोधिगुणा अवशिष्यन्ते तथा विरोधिनोऽपि सन्तिष्ठन्ते। एताः सन्ति जीवनं प्रति ह्रासवाद-व्यष्टिवाद-शास्त्रवादेभ्योऽतिशयिता दृष्टयः। ह्रासवादस्यातिशयः—पूर्वं सकलं शिवं सम्पूर्णन्तत्त्वम्, उत्तरोत्तरन्तत् संह्रसत् विकलमशिवं जायते इति। इदञ्चिश्रित्य व्यवहारेऽपि यन्नवं यच्च परिवर्तितं तत्सर्वमशोभनमतथ्यं मन्यते। विश्वस्य सृष्टि-संहारदृष्ट्या भवत्वत्र तथ्यम्, परञ्च जीवनन्तु 'मङ्गलं मङ्गलानाम्' 'आनन्दाद्ध्येव खल्विमानि भूतानि'''आनन्दं प्रत्यभिसंविशन्ति'' "भोगश्च मोक्षश्च करस्थ एव" इत्याद्यवलम्ब्यैवास्ति सकलं शिवं सम्पूर्णम्। प्रकृता व्यष्टिदृष्टिः अभ्युदयाय श्रेयसे च स्वजीवनमेकाकि, समाजाच्च पृथक् स्वीकरोति। एतदर्थमपि बहुभिर्दार्शनिक आधार उपस्थाप्यते। भवतु कामं व्यष्टेरुन्नतिः, परञ्च तदर्थं समष्टेः परित्याग आवश्यक इति कथमपि न मूर्धन्यः सिद्धान्तः। पिण्डब्रह्माण्डन्यायः एकजीववादः साम्यानुरोधिनोऽर्वाचीनाः सिद्धान्ताश्च व्यष्टिसमष्ट्योरेकत्वमालम्ब्यैव नवनिर्मित्यै चेष्टन्ते, अतोऽस्य श्रेयस्त्वं निर्विवादमेव। अपि चान्योऽप्यस्ति एकः परिष्कार्यो यो ह्यस्माकं शास्त्रवादस्यातिशयः। शास्त्रस्य प्रामाण्ये को हि संशयीत? सत्यशासनाच्छास्त्रत्वम्। सत्यं हि व्यवहारे सत्यशोध एव। सत्यशोधममिलक्ष्यैव भारतीयसंस्कृतौ अनेकशः सम्प्रदाया अभवन्। तेषाञ्च प्रवर्तकानाम् ऋषीणाम् आचार्य-साधुजनानां सत्यानुशासनानि एव शास्त्राण्यभवन्। अतो विभिन्नान्यपि शास्त्राणि सत्यांशमवगाहन्त एव, अत एव च शास्त्राणां परस्परं सामञ्जस्यं विधेयम्। सामञ्जस्यमनादृत्य शुष्कशास्त्रवादः शुष्कबुद्धिवादवज्जडः

सम्बन्धं तमः प्रसारयति । अतः समाजे सामञ्जस्यानुरोधी शास्त्रसहो विवेकः पुरस्कर्त्तव्य एव । ह्रास-व्यष्टि-शास्त्रवादानाम् इयं कल्पिता दृष्टिरेव भारतीयसमाजस्याधःपाते प्राधान्यं भजते । अतो दृष्टिशोधं विधाय यदि संस्कृतज्ञाः स्वपुरातनं सनातनन्तत्त्वं पुनरपि उज्जिजीवयिषेयुस्तदा अयं विशालो भारतीयसंघो भूयोऽपि विशालतमं सांस्कृतिकमैक्यं प्रसारयितुं प्रभवेत् । अयमेवास्माकं संस्कृतज्ञानां महत्तमः पुण्यसम्भारः, इदमेव च विधेयम्, यद् भारतं भारतानाम्, भारतीय-सन्देशश्च भौमण्डलानां भवेत् ।

## दीक्षान्तभाषणम्—

विगतपञ्चदशभ्यो वर्षेभ्यो माननीय-डा० सम्पूर्णानन्दमहोदयानां मन्तव्यैः संस्कृतसमाजः सुपरिचितो विद्यते । एतेषां जीवनव्यापिसंस्कृताध्ययनं संस्कृतसमादरः अधुना च शासन-मधिकृत्यापि संस्कृतसमाजस्य सेवा इत्येतत्सकलं सर्वेषां समक्षमतिरोहितं जागर्ति । तेषां पुरोहितत्वेऽद्य संस्कृतज्ञाः क्रान्तिपथे गृहीतंदीक्षा आसते । क्रान्त्यै इदमभियानम् अवश्यं संस्कृतः संस्कृति-समुद्धारणाय पुनः पूर्वगौरवविकासाय भविष्यति । यतो हि कस्मैचिच्छुमनिर्माणाय ये हि गुणा अपेक्ष्यन्ते ते सर्वे एव—आत्मशोध-सौमनस्य-आस्था-निरालस्यादयः परिलक्ष्यन्ते एषां वक्तृत्वे व्यक्तित्वे आचारे च । एतेषामेव निसृष्टभावः काशिक-राजकीय-संस्कृत-महाविद्याल-यस्य चतुर्थसमावर्तनसमारोहे तेषां प्रदत्तदीक्षान्तभाषणे उपलभ्यते । भाषणस्य च प्रत्येकवाक्ये स्वानुभवस्य, तज्जनितदार्ढ्यस्य, प्रस्तावनसामर्थ्यस्य च सङ्केतः परिलक्ष्यते ।

आत्मशोधार्थं स्वदोषनिरीक्षणमपेक्ष्यते, स्वदोषनिरीक्षणेन च मिथ्या दम्भोऽपहीयते कर्त्तव्यञ्च स्फुरति । सुविदितोऽस्माकं संस्कृतज्ञानां स्वपूर्णत्वे दुरभिनिवेशः ; तं निरस्यता प्रथममेवोक्तम् "यदन्यत्र भाषासु गुम्फितं वाङ्मयं दृश्यते तत्सर्वं संस्कृतवाङ्मयस्यैवोच्छिष्टम्, यन्नेहास्ति न तत् क्वचिदिति नेयं वार्ता मह्यं रोचते……… अभारतीयैरपि विद्वद्भिः प्रभूता ज्ञानसामग्री सम्पादिता, तत्सर्वं विनीतभावेनास्माभिः संग्राह्यम् । न हि कोऽपि दिक्कालादि-रूपाभी रज्जुभिः सत्यं बन्द्धं समर्थः" । स्वपूर्णताया अनेन विकरालदम्भेन न केवलं समाज-पुरोधानं संस्कृतज्ञानामपहृतम्, अपि तु विद्याक्षेत्रे ज्ञानप्रसविनीं जिज्ञासावृत्तिं विनाश्य ज्ञानजडत्वमपि विहितम् । ज्ञानविरोधस्यास्मिन् महातमसि नवं ज्ञानं विज्ञानं वा कुत्र लक्ष्येत? पुरातनमपि ज्ञानमप्रतिभं तेजोहीनं कुर्वन्तः संस्कृतज्ञा विदुषां समक्षं हास्यतां गताः । एत-देवालक्षयितुं माननीयडाक्टरमहाशयैरुक्तम्—"ये विदेशीयं मतमिदमिति सत्यं तिरस्कुर्वन्ति

ते महातमोमये गर्ते पतिष्यन्त्येव" । मूलघातिनमेनं स्वदोषं परिष्कुर्वतां संस्कृत-विद्यार्थिनां दैन्यं तानुद्वेजयति, अतस्ते निश्चिन्वन्ति—"अस्माकं स्नातका दीर्घश्रमोपार्जितां विद्यामर्थासम्पादिकामनुभवन्त इच्छाभिघातशताक्रान्ता नैराश्यहृतौजस इतस्ततो भ्रमन्ति, इयमवस्था आमूलं परिवर्तनमपेक्षते"। एवं निश्चिन्वन्तस्ते सुदृढं विश्वासं प्रकाशयन्ति "गतास्ते दिवसाः येषु संस्कृतं मृतमापेत्याक्रोशः श्रूयते स्म । अयन्तु संस्कृतस्य पुनरभ्युदय-कालः समागतः"। अनेनैकवाक्येनैव सर्वतः संसत्सु संस्कृतविद्यार्थिषु जीवनज्योतिः जागर्ति ।

यदा तदा संस्कृतविद्वांस उत्तरोत्तरं पुरातनपाण्डित्यह्रासमवलोक्य प्रस्तुतनवपरिवर्तनेन बिभ्यति । इयं भीतिर्वर्तमानमालक्ष्य साधीयसी स्यान्नाम, परञ्च संस्कृति-संस्कृतसमुद्धा-रणाय प्रकृतदैन्यपरित्यागो नवश्च पाण्डित्यप्रकर्षः कथन्नेषां भीत्यै भवतः । वस्तुतस्तेषामय-मभिनिवेशः पुरातनदैन्यव्यामोहमेव प्रकाशयति । समुचितमेवोक्तमेतदभिलक्ष्य—"पाण्डित्य-विरोधिन इमे विषया इति भूगोलेतिहासराजशास्त्रादिभीता वयं कौटिल्य-सायण-प्रभृति-विदुषां धवलयशः पङ्किलं कुर्मः" । अग्रे संस्कृतविदुषां विनियोगाय निवेदयन्तः—"यथा नः पितर एतद्देशीया अग्रजन्मानो लोकान् धर्ममुपादिशन् तथैवाद्यापि भवद्भिः कर्त्तव्यम् ।··· अस्माभिर्भारतीयसंस्कृतेः सन्देशः श्रावयितव्यः । भारतीयसंस्कृतेरयमेव सन्देशः भारतं रक्षिष्यति" । का नाम भारतीया संस्कृतिः ? इति विमृशता—"राष्ट्रविशेषो यस्माद् दृष्टि-कोणात जगदवलोकयति, यद्वैचारिकमुपनेत्रं माध्यमीकृत्य लोकेषु चक्षूंषि निक्षिपति तदेव तस्य संस्कृतिः" । सभ्यतासंस्कृत्योरन्तरङ्गबहिरङ्गभावमुपदर्शयता—'संस्कृतिरपरिवर्त्तनीयेति महती भ्रान्तिः' "लोकसंग्रहश्च साधुसंस्कृतेः यथार्थाऽभिव्यक्तिः'। अन्ते अस्माकं राष्ट्रविनियोगाय निवेदयता उक्तम्—"यत्स्वातन्त्र्यं महात्यागतपःप्रभावादस्माभिर्लब्धं तत् मा विशीर्येतेति सर्वैर्यतितव्यम्" । अयमेवास्माकं तात्कालिको विनियोगः । इदमेव पुण्यसंभारोपनीतं स्वातन्त्र्यम् अस्माकं सर्वेषामाशाजीवनम् । आशासे यत्संस्कृतसमाजोऽद्य प्रबुद्धोऽस्ति, डाक्टर-महाशयेनोपस्थापितं सर्वमेतत् प्रश्नजातं विचारकार्पण्यमपहाय विवेचयिष्यति, तपसा विज्ञानेन च स्वीयविद्यां तेजस्विनीं कुर्वन्, भारतं भारतीयां संस्कृतिञ्च स्वजीवनदानेन सफलयिष्यति ।

ललित-कला-सम्मेलनम्—

 काशिक-राजकीय-संस्कृत-महाविद्यालयस्य जीवनेतिहासे तस्य दीक्षान्तसमारोहः नवां भूमिकामारचयति । तत्र च ललितकलासम्मेलनमेको नवः सुमधुरः अनुच्छेदः । संस्कृतसमाजस्य

प्रगतेरभावे लोक-वैमुख्यं हेतुरुच्यते । परञ्च जीवनं प्रति अस्य समाजस्य काचिदपूर्वा निष्ठा सर्वैः स्वीक्रियते, तस्यां यदि कला अपि निविष्टाः स्युस्तदा तासां माधुर्यमध्यमेन अन्तर्बाह्यलीनाः सर्वा अपि निर्मित्साः सुविकसिता भवेयुः । एतदुद्दिश्य ललितकलानाम् अध्ययन-शोध-प्रयोगाणाम् अयं समारम्भः सर्वैरभिनन्दनीयः । विगतवर्षाणां कार्यारम्भम् अस्य च वर्षस्य विराट्-सम्मेलनमाकलय्येदं सम्भावयामो यदयं महाविद्यालयो यथा ज्ञाने तथा कलास्वपि स्वमहत्त्वं ख्यापयिष्यति । एतत्सिद्ध्यै द्विविधं सौविध्यमत्र लप्स्यते । प्रथमः—अनुसन्धान-विभागस्य हस्तलिखितग्रन्थेषु उपलब्धो विविधकलानां दुर्लभग्रन्थराशिः । द्वितीयः—भारत-वर्षस्य विभिन्नप्रदेशीयविद्यार्थिनामेकत्र समवायः। विभिन्नकलाप्रवाहस्य एकत्र संगमः परिचयः आदानप्रदानं समन्वयश्च तत्तत्प्रदेशीयविद्यार्थिभिः सुकराः सन्ति । लोकनृत्ये लोकगीतेऽपिबहुशो भारतीयाः कलाः येन केनाऽपि रूपेण जीविता विद्यन्ते । यदि तत्तत्प्रदेशीयविद्यार्थिनां तेषां लोक-नृत्यगीतानां प्रातिनिध्यं भवेत् तर्हि परस्परादानप्रदानेन शास्त्रीयपरिष्कारेण च समस्ता अपि ताः सुपुष्टाः सत्यो विकासमाप्नुयुः। विशेषतश्च संस्कृतविद्यार्थिनामभिरुचिः कलासु धार्मिकीं सांस्कृतिकीञ्च भावधारां प्रवाहयिष्यत्येव । अयं महानुपकारोऽस्य कलाक्षेत्रे । यद्ययं विद्यार्थिनां समारम्भः अधिकारिभिः सहयोगेन संवर्धितः स्यात्तदैकमेवेदं कार्यं राष्ट्रस्य समाजस्य च महतीं सेवां विधास्यति।

अयं परमहर्षस्य विषयो यदस्मिन् कार्ये प्रारम्भत एव माननीयशिक्षामन्त्रिणां दिङ्निर्देशः वरदहस्तश्च विद्यार्थिभिरुपलब्धः । आशासे शीघ्रमेव स्थायितां सुव्यवस्थाञ्च प्राप्स्यति ।

## विश्व-शान्ति-सम्मेलनम्—

गतदिसम्बरमासस्य प्रथमेऽन्तिमे च सप्ताहे क्रमशः शान्तिनिकेतने सेवाग्रामे च अखिलजगतः शान्तिवादिनां सम्मेलनमभूत् । अस्मिंश्चतुस्त्रिंशत्तो राष्ट्राणां प्रतिनिधयः सम्मिलिता अभूवन् । जाति-राष्ट्र-वर्ग-साम्राज्य-विग्रहाणां प्रज्वलितदावानले इदं सम्मेलनं विश्वकविरवीन्द्रनाथस्य विश्ववन्द्यस्य च महात्मगान्धिन आश्रमे सम्प्रति वञ्चितोऽपि तयोर्वचनामृतैः भवद् यदपूर्वं महत्त्वं संकेतयति भारतवर्षस्य, तत् सर्वैरवधेयम्, अनुभवितव्यम्। अद्य सर्वेषां विचारकाणां समक्षं एते प्रश्ना अवश्यं समाधेयाः विद्यन्ते । सम्भवि तृतीयं महायुद्धं कथं रुद्धं भवेत् ? शान्त्यै सुखाय च आविष्कृतानि संवर्धितानि च विज्ञानसाधनानि कथं मानवशोषणाय संहाराय च न प्रभवेयुः ? कां नीतिं प्रयोगपद्धतिञ्चावलम्ब्य मानवसमाजस्य नवनिर्माणं भवेत् यस्मिन् सर्वे एव मानवा साभिलाषाः स्वतन्त्रं सुसुखं स्वं स्वं धर्मं जीवनं ख्यातिवाहयेयुः ? के च ते साधनदोषाः ये शान्त्यै कृतनिश्चयमपि हठात् संहारगर्ते पातयन्ति ? एतानेव समाधातुं शान्तिवादिनामिदं सम्मेलनमत्राभूत् । पश्चात्त्यानामेवं विश्वासो वर्तते—

"भारतवर्षं गान्धिनमजनयत्। ते च गान्धिमहाभागाः स्वानन्तरमपि तथाविधान् जनान् निर्माय गताः, ये तेषाम् अहिंसाशिक्षायाः प्रयोगादिषु निजं सम्पूर्णं जीवनं समर्प्य अत्यन्तं सुतप्ताः सुपरिचिताः सन्तः अद्यापि स्वश्रद्धायामचलास्तेजस्विनस्तिष्ठन्ति । एतेषामेव पुरुषाणां दर्शनाय पाश्चात्त्या अतिथयोऽत्रागच्छन्ति" (होरेस अलेग्जेन्डर)। सार्धद्विशता-ब्दानन्तरम् अद्यपुनः संसारस्य मनीषिणः भारतवर्षस्य शान्तिसन्देशमादातुं स्वयमत्रागत-वन्त इत्यहो ! भारतवर्षस्याध्यात्मिकं वैभवम् । अस्मिन् सम्मेलने समाधेयान् त्रिधा विभज्य विचारोऽभूत् । (१) आगामिमहायुद्धमपावर्तितुं किमाशु आचरणीयम्, (२) न्यायं शान्तिञ्चाधारीकृत्य नवसमाजनिर्माणाय विधायकः कार्यक्रमः को भवेत्, (३) विश्वशान्त्यै अग्रिमान्दोलने के सिद्धान्ता अवलम्ब्याः के चाधाराः प्रयोगाश्च भवेयुः । अस्मिन् विषये महात्म-गान्धिप्रतिपादित-सत्य-अहिंसा-सत्याग्रह-साधनशुद्धि-विकेन्द्रीकरण-शरीरश्रमादिविषयेषु बहुधा विचारोऽभूत् । अस्मिन् सम्मेलने गान्ध्यनुयायिभिर्भारतीयसाधकैर्यः सन्देशोऽदायि, तस्यांश-विशेषः एवैर्विशेषतश्चास्माभिर्विचारणीयः। 'सन्त' विनोबाभावे-महाभागेनोक्तम्—'अहं विश्व-व्यापियुद्धेभ्यो न बिभेमि । बिभेमि क्षुद्रकलहेभ्यः । जागतिकयुद्धानि तु अहिंसायाः समीपं प्रत्येमि ।" एतदेव स्पष्टयता आचार्यकिशोरलालमश्रुवालामहाशयेन स्वस्मिन् भाषणे उक्तम्—"जागतिकयुद्धानि ईश्वरप्रेरितानि भवन्ति, यदा वयं सरलतया नावगच्छामः, परमकारुणिक ईश्वरस्तदा अस्माकं बुद्धिं परावर्तयितुं अहिंसां प्रति च सवेगमाक्रष्टुं जागतिकयुद्धार्थं प्रेरयति । तेन सीमितविचारक्षेत्रानुवर्तिन्याः क्षुद्रबुद्धयाः मानवः प्रमुच्यते, समस्तमानव-तादृशा च स सर्वं विचारयति—अयं अहिंसां प्रति पदक्रमः, किन्तु क्षुद्रयुद्धानि प्रति नैवम् । तान्यहिंसायाः परमशत्रुभूतानि, ततश्च दूरापसारकाणि । अतस्तेभ्योऽस्माभिः सावधानै-र्भाव्यम् ।" अन्ते च अजातशत्रुणा डा० राजेन्द्रप्रसादमहाभागेन गान्धिकुटीतः प्रसारिते भारतीयसन्देशे उक्तम्—"यथा पङ्केन पङ्कस्य परिमार्जनं व्यर्थम्, तथा युद्धस्य युद्धेन, विध्वंसकशस्त्रनिर्माणेन युद्धार्थं समधिकजनसमूहसङ्घटनद्वारा च युद्धं समापयितुमपि व्यर्थ-प्रयास इति गान्धिनाऽदर्शि । अतः विश्वशान्तिवादिनामियं परिषत् संसारस्य सर्वसाधारणान् स्त्री-पुरुषान् इदं निवेदयति यत्ते स्वीयं वैयक्तिकं जीवनम् एवं रचयेयुः येन जीवनं शान्तिमयं भवेत् ।"

उपर्युक्तसन्देशे व्यक्तिजीवनशुद्धयै यो निर्बन्धो दृश्यते स एव मानवशान्त्यै निदानम् । सर्वेषां सुधाराणां प्रथमा प्रयोग-भूमिः व्यष्टिः, यतो व्यष्टेरेव प्रसारः समष्टौ भवेत् । एतद्वि-परीतं यदि समष्टिरेव पूर्वं प्रयोग-भूमिः स्यात्तदा समष्टेरात्मानमाकलयितुमशक्यत्वेन समष्टौ संस्काराभावात् व्यष्टावपि संस्कारो नैव स्यात् ।

काशिक-राजकीय-संस्कृत-महाविद्यालय-पत्रिका

# आवश्यकी सूचना

(१) पत्रिकेयं प्रतिवर्षं यथासम्भवं वारचतुष्टयं सरस्वतीभवनात् प्रकाशयिष्यते।

(२) अस्याः खलु सरस्वतीभवनस्थैर्विद्वद्भिर्विद्यालयीयाध्यापकैरन्यैश्च स्वोपज्ञविचारविचारकैर्निबद्धानामनुसन्धानमूलकानामन्येषाञ्चोपयोगिनां निबन्धानां प्रकाशनेन संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः सम्यगालोचनाप्रवृत्तेश्चोत्पादनं प्रोत्साहनं चैव मुख्यमुद्देश्यम्।

(३) उपरिनिर्दिष्टगुणविशिष्टानामेव लेखानामस्यां प्रकाशनविषये

प्रिन्सिपल,

**गवर्नमेण्ट-संस्कृत-कालेज,**
बनारस।

इति सङ्केतेन पत्रव्यवहारो विधेयः।

(४) पत्रिकाया ग्राहकत्वमभिलषद्भिः,

सुपरिण्टेण्डेण्ट,

**प्रिण्टिङ्ग ऐण्ड स्टेशनरी,**
संयुक्तप्रान्त, इलाहाबाद।

इति सङ्केतेनैव पत्रव्यवहारो विधेयः।

---

## समुत्कृष्टसंस्कृतवाङ्मयस्य प्रकाशनम्

सारस्वतीभवन-ग्रन्थमाला

**प्रिन्सिपल, गवर्नमेण्ट-संस्कृत-कालेज, बनारस।**
प्रधानसम्पादकः

वेद-दर्शन-साहित्य-ज्यौतिष-तन्त्र-धर्मशास्त्रादिविषयकान् अद्य-यावदमुद्रितान् प्राचीनानुत्कृष्टग्रन्थान् विवेचनापुरःसरं तत्तच्छास्त्रनिष्णातैर्विद्वद्भिः सम्पाद्य प्रकाशयन्ती ग्रन्थमालेयं १९२० तमख्रिस्तवत्सरात्प्रभृति संयुक्तप्रान्तीयशासकानामाज्ञया प्रचलति। अस्यां चाद्य यावत् प्रायेणाशीतिसंख्यापर्यन्तं ग्रन्थाः प्रकाशिताः। तस्याः सूची संयुक्तप्रान्तीयगजटपत्रे प्रायेण प्रकाश्यते, अस्मिन्नङ्केऽपि यथास्थानं प्रकाशिता विद्यते। ग्रन्थमालायाः प्राप्तिस्थानम्—

सुपरिण्टेण्डेण्ट,

**प्रिण्टिङ्ग ऐण्ड स्टेशनरी,**
संयुक्तप्रान्त, इलाहाबाद।

---

Published by the Superintendent, Printing and Stationery, U. P. Allahabad.

मुद्रक—पं० बैकुण्ठनाथ भार्गव, आनन्द-सागर प्रेस, गायघाट, बनारस १.